श्रीमद्-रामचन्द्रविरचितं

# कौमुदीमित्राणन्दम् ।



पूज्यपादप्रवर्त्तकश्रीमत्कान्तिविजयमुनिपुङ्गवा-
न्तेवासिमुनिचतुरविजयविनेयमुनि-
पुण्यविजयेन संशोधितम् ।

तच्च

मुनिप्रवरश्रीमद्वल्लभविजयोपदिष्ट-पत्तनवास्तव्यप्राग्वाट-
ज्ञातीय-श्रेष्ठि-न्याहालचन्द्रात्मज-छेहेरचन्द्र-
भार्या-विजकोर-द्रव्यसाहाय्येन

प्रसिद्धकर्त्री

भावनगरस्था श्रीजैनआत्मानन्दसभा.



| | | |
|---|---|---|
| वीरसंवत् २४४३<br>आत्मसंवत् २२ | मूल्यमाणक-<br>त्रयम् ३ । | विक्रमसंवत् १९७३<br>ईसवीसन १९१७ |

॥ अर्हम् ॥

## ॥ निवेदनम् ॥



**कौमुदीमित्राणन्दनाम्नो** द्वितीयरूपकस्यास्य निर्माता श्रीमद्–हेमचन्द्राचार्यशिष्यः श्रीमान् **रामचन्द्र** एवेत्यामुखान्तर्गतेन–

" अस्ति खलु श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनविधानवेधसः श्रीमदाचार्यहेमचन्द्रस्य शिष्येण प्रबन्धशतविधाननिष्णातबुद्धिना नाट्यलक्षणनिर्माणपातावगाढसमस्तसाहित्याम्भोधिना विशीर्णकाव्यनिर्माणनिस्तन्द्रेण श्रीमता **रामचन्द्रेण** विरचितं कुतूहलसहस्रनिधानं **कौमुदीमित्राणन्दा**भिधानं निःशेषरसभावप्रदीपकं द्वितीयं रूपकम् । "

इत्यनेन पाठेन स्पष्टमेव प्रतीयते ।

सत्तासमयस्त्वेषां हेमचन्द्राचार्यसत्तासमय एव ।

एतद्ग्रन्थकर्त्रा श्रीमता काव्य–नाटक–नाट्य–न्यायग्रन्था विनिर्मिताः सन्ति । ते चैते, **काव्यम्**—कुमारविहारशतकम् । **नाटकानि**—रघुविलास–नलविलास–यदुविलास–कौमुदीमित्राणन्द–निर्भयभीमव्यायोग–सत्यहरिश्चन्द्र–मल्लिकामकरन्द–वनमालिकानाटिकाः । वनमालिकानाटिका अमरचन्द्रकृतेति केचिन्मन्यन्ते । नाट्यग्रन्थः–नाट्यदर्पणं गुणचन्द्रसाहाय्येन कृतम् । प्रबन्धशतं " रामचन्द्रकृतं प्रबन्धशतं द्वादशरूपकनाटकादिस्वरूपज्ञापकम् " इति एकस्मात्प्राचीनहस्तलिखितपत्राज्ज्ञायते । नायं ग्रन्थः सांप्रतं दृश्यते । प्रबन्धशतकर्तृत्वख्यातिरप्येतद्ग्रन्थविरचनेन प्राप्ता स्यादेत-

द्धन्थकर्त्रेत्यपि संभाव्यते । प्रबन्धशतस्य प्रबन्धानां शतमित्यर्थो घटते कथमस्मिन् प्रबन्धानां शतमिति पुस्तकाभावेन न ज्ञायते । **न्यायग्रन्थः**—द्रव्यालङ्कारः सवृत्तिकः, बौद्धमतखण्डनरूपो गुणचन्द्रसाहाय्येन विरचितः, जेसलमेरुदुर्गस्थताडपत्रीयपुस्तक-भाण्डागारे खण्डित उपलभ्यते । एतद्व्यतिरिक्ता अन्येऽपि ग्रन्था विरचिता सन्ति न वेति न ज्ञायते ।

संशोधनसमयेऽस्य पुस्तकद्वयं प्राप्तम् । तत्राद्यं क-संज्ञकं पत्तन-स्थवाडीपार्श्वनाथभाण्डागारसत्कमेकविंशतिपत्रात्मकमशुद्धं प्राचीनं श्राद्धवर्यवाडीलाल-हीराचन्द-दलालद्वारा संप्राप्तम् । द्वितीयं ख-संज्ञकं श्रीयुत-तनसुखराम-मनःसुखराम-त्रिपाठी, बी. ए.-महाशयसत्कमशुद्धं प्राचीनं पञ्चविंशतिपत्रात्मकं द्वादशभिः पत्रैर्वि-रहितं श्रीयुत-चीमनलाल-डाह्याभाई-दलाल, एम. ए. महाशय-द्वारा संप्राप्तम् । एतत्पुस्तकप्रेषकयोः सज्जनयोरुपकारं न प्रस्मरामः ।

पुस्तकद्वयसाहाय्येन संशुद्धीकृतेऽप्यस्मिन् याः काश्चना-शुद्धयो दृष्टिपथमवतरेयुस्ताः संशोधयन्तु धीमन्त इति प्रार्थयते—

श्रीमच्चतुरविजयचरणकमलोपासकः
**पुण्यविजयः**

॥ अर्हम् ॥

॥ श्रीमद्विजयानन्दसूरीश्वरेभ्यो नमः ॥

प्रबन्धशतकर्तृश्रीमद्रामचन्द्रसूरिविरचितं

# कौमुदीमित्राणन्दम् ।

यः प्राप निर्वृतिं क्लेशाननुभूय भवार्णवे ।
तस्मै विश्वैकमित्राय त्रिधा नाभिभुवे नमः ॥ १ ॥

( नान्द्यन्ते )

सूत्रधारः—( साक्षेपं ) भो भोः सभासदः ! सावधानाः शृणुत विज्ञापनामेकाम् ।

व्यामोहप्रतिरोहपीतमनसः प्रज्ञाप्रसादाश्रिता-
स्तत्साधुप्रजानते किमपि तैर्वाध्यामहे किं वयम् ? ।
सूर्याचन्द्रमसावपि द्युतिमयौ निस्तेजसी लोचने
जानीतः स्फुरिताञ्जनैकवपुषौ तत्किं न तौ भास्वरौ?॥२॥

( आकाशे )

किमादिशत ?, ये दुरात्मानो भवन्तमप्यवजानते न ते नाट्यवेदाम्भोधिपारदृश्वानः, ततः कृतं वैमनस्येन । प्रभूतकौतुकानुबन्धं [ प्रबन्धं ] कमप्यभिनीय व्यपेतव्यामोहतमांसि

प्रसादय प्रचलभाग्यभागलभ्यलभ्यानां सभ्यानां मनांसि। (विमृश्य) यथावस्थितमादिशन्ति सभ्याः। दुर्जनोपनीतक्लेशकोटिकण्टकिला खल्वियं संसाराटवी। गरीयसे च फलायोपनिबद्धकक्षेण प्रेक्षापूर्वकारिणा (लोचने निमील्य) सोढव्या एव प्रत्यूहव्युपनिपत्तयः। तदहं गृहं गत्वा प्रबन्धविशेषं कमपि पर्यालोचयामि।

(नेपथ्ये)

कृतं पर्यालोचनेन। अस्ति खलु श्रीसिद्धहेमचन्द्राभिधानशब्दानुशासनविधानवेधसः श्रीमदाचार्यहेमचन्द्रस्य शिष्येण प्रबन्धशतविधाननिष्णातबुद्धिना नाट्यलक्षणनिर्माणापातावगाढसाहित्याम्भोधिना विशीर्णकाव्यनिर्माण [ निस् ]-तन्द्रेण श्रीमता रामचन्द्रेण विरचितं कुतूहलसहस्रनिधानं कौमुदीमित्राणन्दाभिधानं निःशेषरसभावप्रदीपकं द्वितीयं रूपकम्।

सूत्रधारः—कथमयं वत्सस्ताण्डकः प्रबन्धविशेषं निर्णयति ?।

(प्रविश्य)

नटः—भाव! प्रणमामि।

सूत्रधारः—मार्ष! कौमुदीमित्राणन्दनाम्नः प्रकरणस्याभिनये कृतनिश्चयोऽसि ?।

नटः—सन्ति नामात्र भूयांसि सामाजिकजनमनःकौतुकानुबन्धीनि कथावस्तूनि। रसनिवेशभावाभावयोः पुनर्भावः प्रमाणम्।

सूत्रधारः—( विहस्य ) प्रकरणस्यास्य सरसतायां किमुच्यते ? । यतः—

प्रबन्धानाधातुं नवभणितिवैदग्ध्यमधुरान्
कवीन्द्रा निस्तन्द्राः कति नहि मुरारिप्रभृतयः ? ।
ऋते रामान्नान्यः किमुत परकोटौ घटयितुं
रसान्नाट्यप्राणान् पटुरिति वितर्को मनसि नः ॥ ३ ॥

अपि च—

प्रबन्धा इक्षुवत्प्रायो हीयमानरसाः क्रमात् ।
कृतिस्तु रामचन्द्रस्य सर्वा स्वादुः पुरः पुरः ॥ ४ ॥

नटः—( सावहेलं ) भाव !

परोपनीतशब्दार्थाः स्वनाम्ना कृतकीर्तयः ।
निबद्धारोऽधुना तेन विश्रम्भस्तेषु कः सताम् ? ॥ ५ ॥

सूत्रधारः— मार्ष ! नास्य पर्यनुयोगस्य वयं पात्रम् । अत्रार्थे प्रबन्धविधानसमानकालाः सुमेधस एव प्रमाणम् ।

नटः—( सविषादं ) भाव ! निर्विण्णोऽस्मि तेनामुनाऽपदे क्लेशावेशदुर्भगेन शैलूषविद्यावैभवोपभोगेन । ततस्तां कामपि क्रियामनुतिष्ठ श्रेष्ठां यया विश्रान्ताशेषविपदं श्रायसीं संपदमासाद्य सततसंनिहितमित्रकलत्रस्वापतेयः सुचिरममन्दमानन्दमुद्वहामि ।

सूत्रधारः—( साक्षेपं ) मार्ष ! संसारस्वरूपपरिज्ञानवैदग्धीवन्ध्य इव व्याहरसि । ननु—

अकृताखण्डधर्माणां पूर्वे जन्मनि जन्मिनाम् ।

सापदः परिपच्यन्ते गरीयस्योऽपि संपदः ॥ ६ ॥

( नेपथ्ये )

विवेकोपनिषदमभिहितवानसि ।

सूत्रधारः—कथमयं मित्राणन्दभूमिकावाही नर्तकः शब्दायते ? । तदेहि मार्ष ! करणीयान्तरमनुतिष्ठामः ।

( इति निष्क्रान्तौ । )

॥ आमुखम् ॥

---

( ततः प्रविशति मित्राणन्दो मैत्रेयश्च । )

मित्राणन्दः—परमार्थोऽयम्—

अकृताखण्डधर्माणां पूर्वे जन्मनि जन्मिनाम् ।
सापदः परिपच्यन्ते गरीयस्योऽपि संपदः ॥ ७ ॥

(विमृश्य मैत्रेयं प्रति) प्रयाणप्रारम्भनिरूपितस्य शुभोदर्कसंसूचिनस्तस्य त्वदीयस्य शकुनस्य तदिदं यानपात्रभङ्गावेदितं सुभमभूत् ।

मैत्रेयः—सार्थवाहपुत्र ! मास्म विषीद,

अस्तमयति पुनरुदयति पुनरस्तमुपैति पुनरुदेत्यर्कः ।
विपदोऽपि संपदोऽपि च सततं न स्यास्नवः प्रायः ॥८॥

तदेहि जानीवः कोऽयं द्वीपः ? । ( इति परिक्रामतः । )

मित्राणन्दः—(विलोक्य) कथमिदं पुरो देवतायतनम् ?, तदस्य जगत्यां स्थित्वा मानुषं कमपि विलोकयामः ।

मैत्रेयः—यथेदं सर्वतः काञ्चनमयं तथा जाने देवताविनिर्मितम्, मध्ये च भगवतः पाशपाणेः प्रतिनिधिर्दृश्यते ।

(नेपथ्ये)

(क) नवकंतिमंडणाण वि मुत्ताणं सुत्तिसंपुडविआणं ।
गुणसंगममलहंतीण निप्फलो जम्मसंरंभो ॥ ९ ॥

मित्राणन्दः—अनुरूपं पतिमनासादयन्त्याः कस्या अपि लावण्यपुण्यवपुषः पक्ष्मलाक्ष्याः परिदेवितमिदम् ।

(नेपथ्ये)

(ख) करसंबंधं काऊण अंगपरिरंभणं अदिंतेहिं ।
न विडंबिज्जइ मित्तेहि किं ति एहिं सरोरुहिणी ? ॥१०॥

मित्राणन्दः—इदमपरमस्या वराक्याः किमपि वैशसम् । यत्किल पाणिग्रहणेऽपि पत्यङ्गपरिरम्भालाभः । (मैत्रेयं प्रति) क्षणं निक्षिप दिक्षु चक्षुषी । जानीहि कुतस्त्योऽयं परिदेवितध्वनिः ? ।

मैत्रेयः—(विलोक्य) वयस्य ! पश्य निकषा सहकारखण्डं दोलाधिरूढां प्ररूढप्रौढयौवनाश्रितां वनिताम् ।

मित्राणन्दः—(सवितर्कं)

---

(क) नवकान्तिमण्डनानामपि मुक्तानां शुक्तिसंपुटविगानाम् ।
गुणसंगममलभमानानां निष्फलो जन्मसंरम्भः ॥

(ख) करसंबन्धं कृत्वा अङ्गपरिरम्भणमददानैः ।
न विडम्ब्यते मित्रैः किमिति एभिः सरोरुहिणी ॥

लक्ष्मीः किं पितुरम्बुधेः प्रतिकलं कूलेषु संक्रीडते ?
कन्या काऽपि किमस्य खेलति मुहुर्देवस्य यादःपतेः ?।
द्वीपस्यास्य पयोधिरोधसि कृतस्थानस्य वेलोच्छल-
न्नानारत्ननिधेः किमत्रभवती लीलायते देवता ? ॥११॥

मैत्रेयः—

काऽप्येषा सरुषः प्रभाववशतो देवस्य दैत्यस्य वा
लोके शोकमलीमसेऽत्र मनुजीभावं दधौ देवता ।
तेनेयं सुरलोकवैभवपरीरम्भाकुलोच्चैस्तरां
दोलोत्सालमिषेण खेचरगतिप्रागल्भ्यमभ्यस्यति ॥१२॥

मित्राणन्दः—

एतां निसर्गसुभगां विरचय्य वेधाः
शङ्के स्वयं स भगवानभिलाषुकोऽभूत् ।
तेनापरग्रहभयाद्वियदङ्कदोला-
दोलायितैरमनुजग्रहणां चकार ॥ १३ ॥

(विमृश्य) यथेयं निरुद्धदोलाकेलिः प्रतिमुहुरस्मान् कटाक्षयति तथा व्यक्तमनयाऽपि वयं दृष्टाः । तदुत्तीर्य नेदीयांसो भवामः ।

मैत्रेयः—कथमियमुत्तीर्णा दोलातः ? ।

मित्राणन्दः—न केवलमुत्तीर्णा तरुभिस्तिरोधाय क्वचिदपि गता च । हा ! हताः स्मः । अकाण्डक्रोधसंरुद्धचेतसा वेधसा कन्यारत्नमिदमुपदर्श्य त्वरिततरं तिरोधाय सत्यमस्माकमद्य यानपात्रभङ्गः कृतः । कुतः पुनरियमस्माभिरु-

पलभ्या ? ।

( नेपथ्ये )

स्वागतमतिथिभ्याम् ।

**मैत्रेयः**—कथमयं तापसः शब्दायते ? ।

( ततः प्रविशति तुन्दिलः । )

( उभौ प्रणमतः । )

**तुन्दिलः**—स्वस्ति यजमानाभ्याम् ।

**मित्राणन्दः**—मुने ! देशान्तरिणो वयमनभिज्ञा अत्रत्यवृत्तान्तस्य । तत्कथय कोऽयं द्वीपः ?, कथं च निर्मानुषप्रचारः ? ।

**तुन्दिलः**—महाभाग ! भगवतः पाशपाणेर्वरुणाभिधानोऽयं क्रीडाद्वीपः । सततं च सान्तःपुरः पाशपाणिरत्र क्रीडतीति ब्रह्मचारिणः तपोधना एव प्रतिवसन्ति, न गृहमेधिनः । इदं च प्रशान्तविरोधाभिधानमाश्रमपदम् । घोरघोणो नाम कुलपतिः सततमधिवसति । तदागच्छत यूयम् । पश्यत ब्रह्माण्डभाण्डोदरसंचरिष्णुयशसः कुलपतेर्निःशेषकल्मषच्छिदालङ्कर्मीणां क्रमाम्भोजयुगलीम् ।

( सर्वे आश्रमाभिमुखमुपसर्पन्ति । )

**मित्राणन्दः**—(साश्चर्यं)

जीर्यत्कर्कटपच्यमानचरवः संरक्ष्यमाणोटज-
द्वारास्तर्णकपङ्क्तिभिः शुककुलैरध्याप्यमानद्विजाः ।
एते ते स्थगयन्ति होमसुरभीदम्भापरीरम्भण-
स्फारोद्गारिभिरध्वरस्तवरवैर्दिग्मण्डलीमाश्रमाः ॥१४॥

तुन्दिलः—

नासान्तःस्थितलोचनो गुरुजटाजूटाटवीमेखला-
नीडान्तःकलविङ्ककेलिकलहैर्व्यालोलमन्त्राक्षरः ।
विश्रम्भभ्रमदेणशावककुलव्यालेहनिर्लेपित-
स्कन्धोरःकरपादभालतिलकः सोऽयं पुरस्तान्मुनिः ॥

वामतश्चायं कुलपतेरेव भ्राता गजपादः ।

( ततः प्रविशति (न्ति) कुलपतिर्गजपादप्रभृतयश्च तापसाः । )

तुन्दिलः—(अपवार्य ) प्रभूतप्रधानधनाविवैतौ लक्ष्येते ।

कुलपतिः—तर्हि सुतरां नः संभ्रममर्हता [ म् ] ।

( उभौ प्रणमतः । )

गजपादः—( सादरमिव ) इदमासनमास्यताम् ।

कुलपतिः—( सप्रसादमिव मित्राणन्दं प्रति )

अस्तु स्वस्ति शुभोदयाय भवते संदृष्टपूर्वं वयं
जाताः साम्प्रतमद्भुतामृतरसव्यासेकदष्यद्दृशः ।
कुत्रत्योऽसि ? किमर्थमद्य स भवानस्माकमत्राश्रमे
संप्राप्तः ? प्रथयामि सामसुभगां कामातिथेर्यां त्वयि ? ॥

मित्राणन्दः—( सविनयं ) भगवन् ! कौतुकमङ्गलनगराधिवासिनः क्रमागताद्भुतवैभवस्य जिनदासनाम्नः परमधार्मिकप्रकाण्डस्य वणिजो मित्राणन्दनामा सूनुरहम् । अयं चास्मत्पुरोहिततनयः शकुनमन्त्रकुशलो मैत्रेयः । उन्मीलितयौवनश्चाहं प्रभूतद्रविणोपार्जनाश्रद्धालुरतन्द्रालुना समानकुलशीलविभवेन मकरन्दनाम्ना बालवयस्येन समं यानपात्रमधिरूढः ।

कुलपतिः—सुपन्थाः समाश्रितस्तत्रभवता भवता । निजभुजदण्डाभ्यां हि वणिजां द्रविणोपार्जनं मण्डनं न तु खण्डनम् ।

मित्राणन्दः—अवगाह्य च मध्यमुदन्वतो भगवतः प्रवहणे विशरारुतामधिगतवति गृहीतस्वापतेयसारः कल्लोलान्दोलितं मैत्रेयेण सार्धं फलकमेकमधिरूढः सप्तभिरहोभिरहं पारमधिगतवान् । मकरन्दस्य तु किमपि वृत्तमिति न जानीमः ।

कुलपतिः—महाभाग ! प्रशस्तलक्षणो भवान् नास्पदं विपदाम्, अतः समुपार्जितप्रभूतद्रविणो ध्रुवं संघटिष्यते ते परमप्रेमपात्रं मित्रं मकरन्दः ।

मैत्रेयः—यदादिशति कुलपतिस्तदस्तु ।

( नेपथ्ये )

हंहो वटवः ! प्रवर्तयत वर्णाश्रमजुषामतिथीनां सपर्यार्थं यथौचित्यं पशुविशसनानि ।

मित्राणन्दः—(अपवार्य सोद्वेगं) मैत्रेय ! कोऽयमुभयलोकप्रतिपन्थी पापव्याहारः ?

धिक् तानमुष्य सुहृदो नरकैकमार्गान्
यैः शास्त्रिभिः पशुवधोऽयमिहोपदिष्टः ।
तानप्यमून्मुनिमिषश्वपचान् विचार-
वन्ध्यान् धिगेव खलु यैरयमादृतश्च ॥ १७ ॥

( पुनः कुलपतिं प्रति ) अशेषमपि कल्याणमस्माकं कुलप-

तिमिश्राः संपादयिष्यन्ति । सांप्रतं पुनरिदमेवातिथेयमर्थयामहे ।

कुलपतिः—( ससंभ्रमं ) किं तत् ? ।

मित्राणन्दः—अस्ति नः कियानपि द्रविणसारः तं तावदात्मसात्कुर्वतां कुलपतिपादाः यावद्वयं स्वनगरं प्रति प्रतिष्ठामहे ।

गजपादः—कोऽत्र भोः ! ।

( प्रविश्य )

सर्वशास्त्रः—भगवन् एषोऽस्मि ।

( गजपादः सर्वशास्त्रस्य कर्णे एवमेव । )

( सर्वशास्त्रो निष्क्रान्तः )

कुलपतिः—महाभाग ! निर्विण्णा वयं भिन्नयानपात्राणां वणिनां निक्षेपसंरक्षणेन, तदियमास्तां कथा । संजातपाणिग्रहणोऽसि न वा ? येन तदुचितां कामप्यातिथेयीमाचरामः ।

मैत्रेयः—भगवन् ! असंजातपाणिग्रहण एवायं सार्थवाहसूनुः ।

कुलपतिः— ( विमृश्य ) कोऽत्र भोः ! तापसीषु ? ।

( प्रविश्य तापसी प्रणमति । )

कुलपतिः—वत्से कुन्दलतिके ! द्रुततरमादय कौमुदीम् ।

( तापसी निष्क्रान्ता । )

( प्रविश्य कृतोष्णीषो )

**वणिग्**—भगवन् ! प्राप्ता देशान्तरादपरे सहायाः तदुपनय न्यासीकृतं वित्तम् ।

**गजपादः**—( सावहेलं ) यथैव त्वया मुक्तं तथैवोटजाभ्यन्तरे गत्वा गृहाण ।

( वणिग् मध्यतो वित्तमादाय कुलपतिं प्रणमति । )

**कुलपतिः**—वत्स ! यथावद्धमेव प्राप्तं त्वया द्रविणम् ? ।

**वणिग्**—किमिदमनात्मोचितमुच्यते ? । दुस्तपतपःपरकलितस्य स्वर्गापवर्गशर्मणो भगवतः पांशुप्रायेषु मर्त्यकीटानां विभवेषु को नाम नामः संभवति ? । तद् व्रजामि युष्मत्प्रभावप्रत्यस्तमत्यूहव्यूहः स्वपुरीम् ।

**कुलपतिः**—( सप्रश्रयमिव ) शिवास्ते पन्थानः ।

( वणिग् निष्क्रान्तः । )

**मित्राणन्दः**—भगवन् ! सफलतां प्रयातु मे प्रार्थनालेशः ।

( प्रविश्य कुन्दलता कौमुदी [ च ] प्रणमति ( तः ) । )

**मित्राणन्दः**—( मैत्रेयं प्रति ) सैवेयं वनिता यां दोलाधिरूढामपश्याम । ( पुनः साश्चर्यं ) केयमनभ्रा नेत्रोत्पलानां सुधावृष्टिः ? ।

**कुलपतिः**—वत्से कौमुदि ! समानवयःशीलाकारधारिणः सार्थवाहतनयस्यास्य स्वयं प्रथय महतीमातिथेयीम् ।

**कौमुदी**—( तिर्यगवलोक्य स्वगतं ) ( क ) कटरि !

( क ) कटरि ! अङ्गचङ्गिमा । अहो ! विलासविदग्धिमा ।

अंगवंगिमा । अहो ! विलासविअड्ढिमा । अरिरि ! सुहवत्तणं। ( पुनः साश्चर्यं ) दस्सदंसणेण मणुस्सजम्मो । ( पुनः सदुःखं ) इदिसोऽवि तादस्सासिणेहेण मए वावाए । अव्वो धी धी भुवणरयणविणासणं मे जीविदनिम्माणं ।

मित्राणन्दः—( अपवार्य साभिलाषं मैत्रेयं प्रति )

अधिकुचतटं पौष्पं दाम श्रुती किसलार्चिते
विसवलयितौ पाणी श्रोणीलता रसनाश्रिता ।
तदपि च वपुर्लक्ष्मीरस्याः स्फुरत्यपदं गिरां
प्रकृतिसुभगे पात्रे वेषो यदेव तदेव वा ॥ १८ ॥

कुलपतिः—कोऽत्र भोः ! । पाद्यं पाद्यम्, अर्घोऽर्घः ।

( प्रविश्य तुन्दिलः सर्वमुपनयति । )

कुन्दलतिका—( क ) अय्य ! एदस्स निअदइअस्स नहि नहि अदिधिणो विधेहि आदिधेइं ।

( कौमुदी कृतकसात्त्विकभावान्नाटयन्ती आतिथ्यं प्रथयति । )

कुलपतिः—वत्से ! कोऽयमपूर्वोऽतिथिदर्शनेन प्रतिभयः प्रथितः स्वेदकम्पोपप्लवः । ततः स्वस्थीभूय सर्वमप्याचर । अयं खलु ते प्राणितस्यापि स्वामी । किं पुनरङ्ग ! अपरासां

---

अरेऽरे सुभगत्वम् । दृश्यदर्शनेन मनुष्यजन्म । ईदृशोऽपि तादृक्स्नेहेन मया व्यापाद्येत । अव्वो धिग् धिग् भुवनरत्नविनाशनं मे जीवितनिर्माणम् ।

( क ) आर्ये ! एतस्य निजदयितस्य नहि नहि अतिथेर्विधेहि आतिथेयीम् ।

क्रियाणाम् ? ।

मित्राणन्दः—( सानन्दं मैत्रेयं प्रति )

सुमेधा निश्चितं वेधाः साधूनामानुकूलिकः ।
जाने यानस्य भङ्गोऽयमस्माकं श्रेयसी क्रिया ॥ १९ ॥

( नेपथ्ये )

भो भो आश्रमकर्मपटवो वटवः ! प्रमार्जयत होमगृहाङ्गणानि, प्रज्वालयत जातवेदसः, सन्निधापयत समिधः । ननु इदानीं कुलपतेः प्रदोपसन्ध्यासवनसमयः ।

मैत्रेयः—(सभयमात्मगतं) कथमुत्थानसमयः कुलपतेः ? । ( प्रकाशं ) भगवन् ! एतावत्यपि सार्थवाहप्रयोजने किं निमित्तोऽयं कालविलम्बः ? ।

गजपादः—( कुलपतिं प्रति सकैतवं ) यदभिधत्ते सार्थवाहस्तदस्तु ।

कुलपतिः—( मित्राणन्दं प्रति सविषादमिव ) भवत्प्रेमार्द्रचेतसो वयं किं नानुतिष्ठामः ? । तदुत्तिष्ठ स्वयमेव विमृश्योटजाभ्यन्तरे स्वमुद्रामुद्रितं द्रविणजातम् । वत्से कौमुदि ! दर्शय सार्थवाहस्योटजाभ्यन्तरम् ।

कौमुदी—(क) इदो इदो सत्थवाहे ।

( उभौ मध्यप्रवेशं नाटयतः । )

कौमुदी—( सकपटं ) (ख) अज्जउत्त ! ( पुनः सलज्जं )

(क) इत इतः सार्थवाहः ।

(ख) आर्यपुत्र!, सार्थवाह! अस्ति बहु मन्त्रयितव्यम्, पर-

सत्थवाह ! अत्थि बहु मंतिदव्वं, परं दाणि नावसरो। एदं खु संखेवेण मंतेमि। अप्पा मए तुह समप्पिदो। अउ वरं जं ते पडिहासइ तं करिज्जासु।

मित्राणन्दः—(सरोमाञ्चं) आर्ये! मयापि धनं जीवितं च तवोपनीतमतस्त्वमपि यदभिरुचितं तद्विदध्याः।

कौमुदी—(क) तावस्सं अहिप्पायाणुरोहेण अहं पि सव्वं करिस्सामि। दोणि उण लहुं मिल्लेहिं (इ) दविणजायं, जेण बाहिं नीहरामो।

(तथा कृत्वोभौ निर्गच्छतः।)

कुलपतिः—वत्स मित्राणन्द ! परिणतवयसो वयं कृतप्रायोपवेशननिश्चयाः। इयं च मरुस्थलीयावना स्वानुरूपं पतिमनासादयन्ती ताम्यति वराकी पुत्री मे कौमुदी। तस्याः पाणिग्रहणेन सफलयितुमर्हसि मर्त्यलोकावतारम्।

मित्राणन्दः—(सरोमाञ्चं) भगवन्! कोऽयमस्मादृशातकुलशीलेषु प्रमादातिरेकः?।

कौमुदी—(स्वगतं) (ख) पभाए अप्पेमि एदस्स किं पि

---

मिदानीं नावसरः। एतत्खलु संक्षेपेण मन्त्रयामि। आत्मा मया तव समर्पितः। अतः परं यत्ते प्रतिभासते तत्क्रियताम्।

(क) तदवश्यं अभिप्रायानुरोधेनाहमपि सर्वं करिष्यामि। द्वौ पुनः लघु गृहाण द्रविणजातम्, येन बहिर्निःसरामः।

(ख) प्रभातेऽर्पयामि एतस्य किमपि ममभावं रत्नं येन विश्रम्भं करोति।

सप्पहावं रयणं जेण वीसंभं करेदि ।

गजपादः—सार्थवाह ! नार्हसि कुलपतेः प्रसादभङ्गमाधातुम् ।

कुलपतिः—वत्स ! श्रेयसि मुहूर्ते ते विवाहमङ्गलविधिः । इदानीं तावदध्वश्रमापगमाय पर्णशालामनुसर । भो भोस्तपोधनाः ! अभ्यङ्क्त इङ्गुदीस्नेहेन पयोधिपाथःसंजातलावण्यभङ्गान्यतिथीनामङ्गानि । पाययध्वमध्वश्रमापगमपटीयांसि नालिकेरीफलाम्भांसि । वत्से कौमुदि ! त्वमपि क्रीडान्तरमनुतिष्ठ ।

( नेपथ्ये )

आधत्त त्वरितं तटेषु जलधेः स्वर्लोकधात्रीरुहः
पुष्पाणां प्रकरं परं स्थगयत स्वच्छै रजांस्यम्बुभिः ।
पुंसः कर्मकृतोऽपि रक्षत बत ! स्वेच्छाप्रचारं चिरं
शुद्धान्तेन समं समेष्यति यतो देवः प्रतीचीपतिः ॥२०॥

कुलपतिः—( आकर्ण्य ) कथमयं प्रचेताः संक्रीडितुमात्मनो द्वीपमधितिष्ठति ? । (विमृश्य ) वयमपि तपोभृतां प्रचारं निवारयितुं प्रक्रमामहे, सान्ध्यं च विधिमनुतिष्ठामः ।

( इति निष्क्रान्ताः सर्वे । )

प्रथमोऽङ्कः समाप्तः ॥

## ॥ अथ द्वितीयोऽङ्कः ॥

( ततः प्रविशति गृध्राक्षः । )

गृध्राक्षः—( उच्चैःस्वरं ) भो भो आश्रमवासिनः ! स्वयं वः कुलपतिः समादिशति । अद्य खलु सान्तःपुरः पाशपाणिः संक्रीडितुमिह समायातवान् । ततः सर्वैरपि कुशप्रसूनसमिधः समादाय पुरुषैरहोरात्रमेकमुटजाभ्यन्तर एव स्यातव्यम् ।

( नेपथ्ये )

यदादिशति कुलपतिः तदनुतिष्ठामः ।

गृध्राक्षः—( विचिन्त्य ) मकरन्दस्यापि द्रविणमपहर्त्तव्यमेव (?)। ततस्तावप्यज्ञातवरुणद्वीपव्यवहारावतिथी विशेषतो निवारयामि । ( उच्चैःस्वरं ) भो भोः तपोधनाः ! तावप्यतिथी कचिदपि तिष्ठत इति जानीत ।

( नेपथ्ये )

एतौ तौ देवतायतनजगत्यां तिष्ठतः ।

( ततः प्रविशति मित्राणन्दो मैत्रेयश्च । )

मित्राणन्दः—( मैत्रेयं प्रति ) पश्य पश्य,

ग्लास्नुर्ध्वान्ततर्तिर्मुरेषु ककुभां स्यास्नुप्रतापोदयो
मीलत्युत्पलिनीवनं कमलिनीखण्डं समुन्मीलति ।
मज्जत्यम्बरवारिधावुडुगणो दिक्चक्रमुन्मज्जति
प्राचीं चुम्बति चण्डरोचिषि जगद्वैचित्र्यमालम्बते ॥१॥

गृध्राक्षः—भो भो अतिथी ! भवद्भ्यां त्वरिततरमा-

गन्तव्यमिति कुलपतिर्वा समादिशति ।

मित्राणन्दः—एते वयमागता एवेति गत्वा निवेदय कुलपतिपादेभ्यः ।

( गृध्राक्षो निष्क्रान्तः । )

( नेपथ्ये )

भाभिः कुङ्कुमसोदराभिरभितो देवे प्रभाणां प्रभौ
धात्रीं लिम्पति शीर्णमुद्रनयनैः किं किं न दृष्टं जनैः ? ।
पूर्वोपार्जितकर्मवर्मपटलप्रभ्रष्टदृष्टिक्रियो
नात्मानं न परं च पश्यति कृपापात्रं पुनः कौशिकः ॥२॥

मित्राणन्दः—( आकर्ण्य सभयं ) कस्यापि महौजसो दुःस्थावस्थोपनिपातप्रतिरुद्धाशेषशुभाशुभव्यापारस्यायं व्याहारः । तदेहि मैत्रेय ! देवतायतनस्य पाश्चात्यभागमवलोकयामः ।

मैत्रेयः—( विलोक्य सभयं ) कथमयं पुरुषः सहकारतरुणा सह वज्रकीलैः कीलितोऽस्ति ? ।

( ततः प्रविशति यथानिर्दिष्टः पुरुषः । )

पुरुषः—कष्टं भोः ! कष्टम्,

क्व सा सिद्धश्रेणिप्रणतिसुभगा खेचरदशा ?
क्व चायं संटङ्कस्त्रिभुवनमनःशोकरसिकः ? ।
न यो वाचः पात्रं भवति न दृशो नापि मनस-
स्तमप्यर्थं क्रुद्धो हतविधिरकाण्डे घटयति ॥ ३ ॥

मित्राणन्दः—किमिदमश्रद्धेयम् ? । भवतु, समीपीभूय जानीमः ।

पुरुषः—( वेदनामभिनीय ) अहह ! ।

मित्राणन्दः—

आकारः स्मरसोदरस्तनुलतालक्ष्माणि विश्वत्रयी–
साम्राज्यं प्रथयन्ति शंसति भुजा निर्वीरवर्जं जगत् ।
यद्वा वाङ्मनसां दृशां च न पदं किञ्चित्तु तद्वर्त्तते
यूयं सत्पुरुषा वयं च पथिकाः प्रष्टुं ततः कः क्रमः ? ॥

पुरुषः—( मन्दस्वरं ) महाभाग !

चिन्तयन्त्युपकुर्वन्तः संस्तवं हृदि सस्पृहाः ।
निस्पृहाणां च को नाम कामः संस्तवचिन्तने ? ॥५॥

ततस्तमेनमिदानीं मद्वृत्तान्तमसंस्तुतोऽपि परोपकारैकरसिकः स भगवान्(?) भवानर्हत्येव विज्ञातुम् । किमुत मद्वचमेयं कथा श्रूयमाणापि कातरचेतसां महान्तमातङ्कमावहति । न चानया कथा(थया) प्रथितयापि कुतोऽपि किमपि परित्राणम् ।

मित्राणन्दः—

विधातुं संपदो हर्तुमापदश्च न निश्चयः ।
मनस्तु मे सदाप्यन्यदुःखसंक्रान्तिदर्पणः ॥ ६ ॥

तदावेदयत के यूयम् ?, कथं च दुरवस्थापातिनः ?

पुरुषः—महाभाग ! रत्नकूटपर्वतनिवासी सिद्धश्रेणीशिरःकूटविटङ्कमणीकृतपादपीठोऽहमनङ्गदासाभिधानो योगिसिद्धः ।

मित्राणन्दः—ततस्ततः ? ।

पुरुषः—ग्रैलोक्यकामिनीजनमनःक्षोभैकतानया च कल्प

लताभिधानया दिव्यकण्ठिकया प्रसाधितकण्ठपीठः केनापि व्यसनेन प्रकाशयितुमनुचितेन सततोपप्लुतान्तःकरणश्चूर्णविशेषप्रभावविहितरूपान्तरः प्रतिनिशमस्मिन् वरुणद्वीपे परिभ्रमामि ।

मैत्रेयः—अहो ! समृद्धकुतूहलानुबन्धः प्रबन्धः ।

पुरुषः—अद्य पुनर्निशीथे सान्तःपुरेण क्रीडार्थमितस्ततः स्वैरं विहरता क्रूरचेतसा प्रचेतसा समुपलभ्य 'सततमसूर्यम्पश्यमस्मदन्तःपुरकामिनीजनमभिलाषुकः परिभ्राम्यसि ।' इत्यपिदधानेन कण्ठपीठतः कण्ठिकामाच्छिद्य बद्ध्वा च स्फुटं दोःकन्धरम् ।

मैत्रेयः—( सकम्पं ) ततः किं कृतम् ? ।

पुरुषः—( सदैन्यं ) पुरन्दरेणाप्यविपह्यपीडाभिर्निशातकोटिभिर्बहुकीलकोटिभिः स्वयमिहानीय प्रत्यङ्गं कीलितोऽस्मि ।

मित्राणन्दः—इदानीं प्रचेताः क वर्तते ? ।

पुरुषः—कचिदपि कूले संक्रीडते । प्रतिनिवृत्तः पुनः किमप्यतः परमपि विधास्यतीति नावगच्छामि ।

मैत्रेयः—अश्रोतव्यं अश्रोतव्यम् । ( पुनरपवार्य ) तेनामुना महात्मनोऽस्य प्रबन्धेनाहमप्यन्तःशोकशङ्कुना कीलितोऽस्मि । तद्विचिन्तय किमपि शल्यसमुद्धरणौपयिकम् ।

मित्राणन्दः—अस्ति नः कुलक्रमागतः शल्यसमुद्धरणप्रथितमहिमा नामपवित्रो मन्त्रः । परं कदाचिदप्यनिरूपितप्रत्ययः, अतो मे मनाग् मनः संदेग्धि ।

(नेपथ्ये)

(क) सत्थवाह ! अज्जा कोमुई संदिसेदि ।

मित्रानन्दः—(विलोक्य) कथमियं कुन्दलता ? ।

(मैत्रेयः ससंभ्रममुत्थाय पुरुषं बृहतिकया प्रच्छादयति ।)

(प्रविश्य)

कुन्दलता—(ख) सत्थवाह ! अज्जा कोमुई संदिसेदि ।

मित्रानन्दः—किमादिशति भगवती ? ।

कुन्दलता—(ग) पडिच्छेदु एदं महप्पभावं मणिं सत्थवाहो । कयावि एस महंतं उवयारं करिस्सदि ।

मित्रानन्दः—कुन्दलतिके ! कीदृशमस्य प्रभावमुपवर्णयति कौमुदी ? ।

(कुन्दलता कर्णे एवमेव ।)

मित्रानन्दः—(सहर्षं) साधु ! समयोचितमनुगृहीतोऽस्मि भगवत्या । एते वयमागता एव रहः किमपि भगवत्या सह पर्यालोचयितुम् ।

(कुन्दलता निष्क्रान्ता ।)

मित्रानन्दः—महासत्त्व !

पदार्थः कोऽप्यनर्घोऽपि स्थितः पुंसि लघीयसि ।
महत्त्वसीवचित्तेषु महत्सु खलु नार्घति ॥ ७ ॥

(क-ख) सार्थवाह ! आर्या कौमुदी संदिशति ।

(ग) प्रतीच्छतु एतं महाप्रभावं मणिं सार्थवाहः । कदापि एष महान्तं उपकारं करिष्यति ।

पुरुषः—( साक्षेपं ) लघीयसीति विशेषणं विश्वोपकारक-र्णकच्छ्राभ्यामात्मनो व्यवसायाध्यवसायाभ्यां प्रतिहतमु-पात्तवानसि । महत्त्वक्षीवतां पुनरस्माकमयमकाण्डोपस्थितः प्रचेतःप्रभवः प्रतिभयाडम्बरः समूलकाषं कषितवान् । अपि च अपारेऽप्यस्मिन् त्रिभुवनपारावारे परमार्थतस्त्वमेव महत्त्व-ान्, यस्यायं वाङ्मनसोरुत्तीर्णः स्वभावशीर्णप्रत्युपकारस्पृ-कौलीनवृत्तिर्निरर्गलः परोपकाररसावेशः ।

मित्राणन्दः—

संपत् परस्य रोहन्ती भाग्यानां सुखमीक्षते ।
स्वशक्तितोलनं नाम माहात्म्यं तु महात्मनाम् ॥ ८ ॥

पुरुषः—को नामात्र त्रिलोकीविश्रुते राजवर्त्मनि ान्तिमावहति ? ।

स्फुरन्त्युपायाः शान्त्यर्थमनुकूले विधातरि ।
प्रतिकूले पुनर्यान्ति तेऽप्युपाया अपायताम् ॥ ९ ॥

ततः कृतं कालविलम्बेन । आक्रामन्ति प्राणाः कण्ठपी-ठ् । अतः परं सर्वाङ्गीणप्ररोहिणा वज्रकीलपीडासंभारेण तिहताशेषेन्द्रियस्थानो निरीक्षितुमप्रभविष्णुः । किमपरं दमपि वक्तुमनलम्भूष्णुरस्मि । तत्त्वरिततरं प्रकटय कस्याप्य-न्यस्य मन्त्रस्य वा तन्त्रस्य वा रत्नस्य वा प्रभावातिशयम् ।

मित्राणन्दः—( विमृश्य ) मैत्रेय ! कुतोऽपि शल्यो... ानय ।

मैत्रेयः—( निष्क्रम्य प्रविश्य च ) तदिदमम... वलयं वि

( मित्राणन्दः मणिसंपर्केणाम्भः पवित्रयित्वा सर्वाङ्गीणं पुरुषमभिषिञ्चति । )

**मैत्रेयः**—कथमपसृताः सर्वतोऽपि गात्रतो वज्रकीलकोटयः ? । अहो ! मनसोऽप्यभूमिः प्रभावातिशयो रत्नस्य ।

पुरुषः—( क्षणं लोचने निमील्य सुखमास्ते । पुनर्मन्दस्वरं ) नितान्तशिशिरेणाम्भसा सर्वाङ्गीणमभिषिच्य सुचिरमभिवीजयत माम् ।

( उभौ तथाकुरुतः । )

पुरुषः—( क्षणमाश्वस्य ) मैत्रेय ! अमुष्य कलावीचिनिवेशितस्यौषधेर्वलयस्य द्रवेण मामभिलिम्प येन व्रणानि संरोहन्ति ।

( मैत्रेयस्तथाकरोति । )

मित्राणन्दः—( सकौतुकं ) कथं क्षणादेव गात्रमशेषमप्यलक्षितव्रणसंनिवेशमजायत । ( पुनः साश्चर्यं ) सोऽयमपरो भूर्भुवःस्वश्चेतश्चमत्कारी प्रभावातिशयः ।

पुरुषः—( सहसा प्रणम्य )

कारुण्यैकनिधान ! विश्वजनतासंतापनिर्वापना-
पाथोद ! त्रिजगत्प्रियङ्करगुणग्रामाभिरामोदय ! ।
स्तोतुं यत्र न ते चरित्रविभवं वक्त्रैश्चतुर्भिः प्रभु-
र्ब्रह्मा सोऽपि निसर्गदुर्गजडिमा को नाम त[त्रास्म्यहम् ?] ।

( ग त्राणन्दो लज्जया दि [ क्षु चक्षुषी ] विक्षिपति । )

एष महान्तं उप( पुनरञ्जलिं बद्ध्वा ) इयन्तं कालमहमनङ्गदासः ।

सांमतं पुनः प्राणदानवेतनाक्रीतः कल्पसहस्रावधि मित्राणन्ददासः ।

**मित्राणन्दः**—( कर्णौ पिधाय ) सिद्धाधिनाथ ! मामेवमौचित्यातिक्रमेण मा दवीथाः । वसुधास्पृहणीयवैभवैः खेचरचक्रवर्तिभिर्भवादृशैः प्रबोधितस्य श्रवणोदरसदःसुधावर्षिणश्चाटुकर्मणः पुरन्दरार्हस्य तस्यास्यानर्हाः खलु जठरपीठरीभरणमात्रोन्मदिष्णुचेतसो निस्तेजसो वणिजः ।

( नेपथ्ये )

श्रेयांसि प्रभवन्तु ते प्रतिदिशं तेजांसि वर्धिष्णुतां
तां पुष्णन्तु भवन्तु वीतविपदस्ते पाथसां संपदः ।
आशाः सन्तु भवद्यशोभिरनिशं व्याकोशकुन्दत्विषो
विश्वेषां शमिनां तपोभिरनघैः कल्पान्तजीवी भव॥११।

**पुरुषः**—( समाकर्ण्य सकम्पं ) यथामी घोरघोणप्रभृतयस्तपोधनाः प्रमोदप्रबोधितवाष्पोर्मिमूर्छालकण्ठकुहरसदसो मधुरगम्भीरघोषमाशिषमुद्घोषयन्ति तथा जाने देवतायतनमुपसर्पति पाशपाणिः, तद्विसर्जयत माम् । अपरथा पुनरप्ययं दुरात्मा मयि कामपि यातनामाधास्यति । अहं च सांमतं विगतशोकपरिच्छदः प्रत्युपकारविद् रूपमपि प्रथयितुमनलम्भूष्णुस्ततो यदि तत्रभवतां भवतां हतकस्य दुर्मेधसो विलसितेन किमपि व्यसनमुपजायेत तदा मां पदातिरेणुं स्मरेयुः । (इत्यभिधाय प्रणम्य त्वरिततरं निष्क्रान्तः ।)

**मैत्रेयः**—कथमयं पाशपाणिप्रतिभयेनौषधेर्वलयं विस्मृत्य

गतवान् ? ।

( नेपथ्ये साक्षेपं )

कः कालेन कटाक्षितः? स्फुटरुषा दष्टः फणीन्द्रेण कः ?
स्फूर्जद्वह्निकणः करिष्यति शिरः कस्याशनिर्भस्मसात् ?।
झम्पां कल्पविशृङ्खले जलनिधौ को दातुमुत्कण्ठितः ?
क्रीडावेश्मनि नः क एष मनुजः स्वैरं परिभ्राम्यति ?॥

( उभौ सत्रासमाकाशमालोकयतः । )

( ततः प्रविशति गगनादवतरणं नाटयन् पाशपाणिः कुन्दप्रभप्रभृतिकश्च परिवारः )

पाशपाणिः—अरे मर्त्यौ ! मरणोन्मुखौ कुतस्त्यौ युवाम् ?। किमर्थं च देवतायतनस्य जगतीं पुरन्दरेणापि नमस्करणीयां वसुधासंपर्कपांशुराभ्यां [ पादाभ्यां ] कल्मलयतः ? ।

( उभौ प्रतिभयेन प्रकम्पेते । )

मित्राणन्दः—परमेश्वर ! आवामविज्ञातद्वीपस्वरूपौ भग्नयानपात्रौ वणिजौ देवतायतनरामणीयकमवलोकयितुं जगतीमधिरूढौ ।

कुन्दप्रभः—परमेश्वर ! अबुद्धिपूर्वकोऽयमनयोर्मर्त्ययोरपराधः ।

पाशपाणिः—( सहकारमवलोक्य कुन्दप्रभं प्रति ) परदारविप्लवकारी दुरात्मा खेचरापसदः कथं क्वचिदपि गतवान् ?। अरे मर्त्यौ ! जानीतं तस्य दुरात्मनः प्रवृत्तिम् ? ।

उभौ—( सभयं ) किमपि न जानीवः ।

पाशपाणिः—( विमृश्य ) यथेयं वज्रकीलसंकुला विलोक्यते भूमिस्तथा व्यक्तमनयोर्मर्त्ययोः शल्यसमुद्धारप्रयोगः । ( पुनः साटोपं वज्रकीलानादाय मित्राणन्द केशैर्गृह्णाति । )

( मैत्रेय प्रतिभयेन मूर्च्छति । )

मित्राणन्दः—( धैर्यमवलम्ब्यात्मगतं ) ।

परोपकारः क्रियते स्वस्य कल्याणहेतवे ।
ततोऽपि यद्यकल्याणं कल्याणात्तत्पदं परम् ॥ १३ ॥

तदतः परं भगवतो नाभेयस्य पादाः शरणम् ।

पाशपाणिः—अरे मर्त्यापसद ! निजस्य दुर्विलसितस्य फलमनुभव । ( इत्यभिधाय सहकाराभ्यर्णमुपनयति । )

( नेपथ्ये )

प्रसीद पयसांपते ! श्लथय कौमुदीभर्तरि
त्रिलोकभयकर्मणीं हृदयनेत्रवाग्विक्रियाम् ।
अमी ननु तपोधना जनविहारवन्ध्ये भव-
स्वभावमथितापदः प्रतिवसन्ति घोरे वने ॥ १४ ॥

पाशपाणिः—कथमयं कुलपतेरनुजो गजपादः ? ।

( प्रविश्य )

गजपादः—यादसांनाथ ! कोऽयं निजे जामातरि क्रोधोद्रोधविप्लवः ? ।

पाशपाणिः—( सलज्ज मित्राणन्दं विमुच्य ) मुने ! कथमयं कुलपतेर्जामाता ? ।

गजपादः—दत्ताऽस्मै कुलपतिना युष्मत्पुत्री कौमुदी ।

विवाहमङ्गलमप्यद्यप्रातीनं तदपि युष्माभिरनुष्ठेयम् ।

**कुन्दप्रभः**—जलधिपरमेश्वर! अपरोऽपि मनुष्यो न पात्रं भवत्क्रोधप्रबोधस्य, किं पुनरयं कुलपतेर्जामाता?, तदयं विशेषतो यादसांनाथस्य प्रसादातिरेकं कमप्यर्हति ।

**पाशपाणिः**— एतस्मै प्रयच्छ तर्हि तां कल्पलतां कण्ठिकां येनायं कौमुदीनेत्रयोर्महोत्सवमुपनयति ।

( कुन्दप्रभः कण्ठिकामुपनयति । )

**पाशपाणिः**—गजपाद! जामातरमादाय प्रयाहि पर्णशालायाम् । वयमपि करणीयान्तरमनुतिष्ठामः ।

( इति निष्क्रान्ताः सर्वे । )

॥ द्वितीयोऽङ्कः समाप्तः ॥

---

## ॥ अथ तृतीयोऽङ्कः ॥

( ततः प्रविशति मित्राणन्दो मैत्रेयश्च । )

**मित्राणन्दः**—( स्मृत्वा ) मैत्रेय !

सत्यां यौवनभाजि तापसपतेः पुत्र्यां पुलोमात्मजा
दर्पं विश्वपुरन्ध्रिरूपजयिनि व्यर्थं वहत्यात्मनि ।
दर्पो वाऽस्तु दृशा निमेषकलुपमत्यासनिष्पङ्कया
जातं तर्हि मृगेक्षणासु नियतं पाञ्चालिकाश्चारवः ॥१॥

( पुनः सानन्दं )

अमृतजलधेः पुण्यैस्तैस्तैर्निमज्जितमूर्मिभिः
मृदुभिरभितो देवस्येन्दोर्मरीचिभिरञ्चितम् ।
निजवपुरिदं मन्ये तस्याः कुरङ्गकचक्षुषो
विरतिविमुखैः स्निग्धैर्दिग्ध कटाक्षनिरीक्षितैः ॥ २ ॥

( विमृश्य ) यतः प्रभृति भगवतः पाशपाणेस्तां कल्पलतां कण्ठिकामधिगतवानस्मि ततः प्रभृत्येव कौमुदीसंपर्कपर्वणि कथङ्कारमतितरामुत्कण्ठते चेतः। तदवगच्छ किमत्र निदानम् ?।

मैत्रेयः—स्त्रीपुंसयोर्मन्मथोन्मादैककार्मणं कण्ठिकायाः प्रभावातिशय एवात्र निदानम् । तदेहि पर्यालोचयितुं तां कौमुदीमुपवनाभ्यन्तरे कचिदपि मृगयामहे ।

( नेपथ्ये )

(क) खणदिट्ठजणणिमित्तं बंधुअणं परिचिअं हिअकरं च।
मिल्लंतीणं महिलाण मुणइ जइ माणसं बंभो ॥ ३ ॥

मित्राणन्दः—( आकर्ण्य ) कथमयं लतागृहाभ्यन्तरे कौमुदीध्वनिः?। ( विलोक्य ) मैत्रेय ! कौमुदी कुन्दलता चात्रैव तिष्ठतः तत्तावत्तिरोहिता एव क्षणं शृणुमो वयमनयोः संकथाम् ।

( तत प्रविशति कौमुदी कुन्दलता च । )

कौमुदी—( सकैतव ) (ख) अहवा निसग्गचंगंगसन्नि-

---

(क) क्षणदृष्टजननिमित्त बन्धुजन परिचित हितकर च ।
मुञ्चतीना महिलाना जानाति यदि मानस ब्रह्मा ॥

(ख) अथवा निसर्गचङ्गाङ्गसन्निवेशाभिर्विचित्रभूषणाभिर्नगर-

वेसाहिं विचित्तभूसणाहिं नगरविलासिणीहिं विलुत्तहिअयस्स तस्स को नाम अम्हारिसीदरिद्दकन्नगासु अणुराओ ? । ता निप्फलो चेअ मे एस बंधुअणपरिच्चाए पारंभो ।

कुन्दलता—(क) सहि ! कीस अत्ताणयं विसायपिसाएण संतावेसि ? ।

अंगाण सन्निवेसो हलिअसुआणं पि तत्तिओ चेअ ।
वेसेणं चिय लायण्णविम्हओ धणवइसुआणं ॥ ४ ॥

मैत्रेयः—पश्य कौतुकम्,

प्रकृतिचपलं चक्षुर्वाचः स्थिरा हरिणीदृशः
सरलिमपदं नासान्यासो भ्रुवौ कुटिलस्थिती ।
नवधवलिमा गण्डाभोगोऽधरः किसलारुणः
किमपि गुपिला नाभिर्वक्षः प्रकाशपयोधरम् ॥ ५ ॥

कुन्दलता—(ख) अवि य—

काणं पि अंगलट्ठी भूसिज्जइ भूसणेहि तरुणीणं ।
भूसिज्जइ उण काणं पि भूसणं अंगलट्ठीए ॥ ६ ॥

---

विलासिनीभिर्विलुप्तहृदयस्य तस्य को नामास्मादृशदरिद्रकन्यकासु अनुरागः ? । तन्निष्फल एव ममैष बन्धुजनपरित्यागे प्रारम्भः ।

(क) सखि ! कस्मादात्मानं विषादपिशाचेन संतापयसि ।
अङ्गानां सन्निवेशः हालिकसुतानामपि तावदेव ।
वेषेणैव लावण्यविस्मयः धनपतिसुतानाम् ॥

(ख) अपि च—
कासामपि अङ्गयष्टिः भूष्यते भूषणैः तरुणीनाम् ।
भूष्यते पुनः कासामपि भूषणं अङ्गयष्टिना ॥

मित्राणन्दः—( उपसृत्य ) प्रिये ! लावण्यपुण्यपुण्येष्वपि किमात्मनोऽङ्गेषु वृथा वैराग्यमुद्वहसि ? ।

गात्रं संनतगात्रि ! नेत्रसुखदं निःश्वासपूराहति-
नासाह्लादकरी रदच्छदसुधा जिह्वाऽतिसौहित्यकृत् ।
नादः किन्नरकण्ठि ! कर्णसुखदो वक्षोजलक्ष्मीरियं
वक्षः प्रीणयते मृगाक्षि ! वद ते किं नेन्द्रियाणां मुदे ? ॥७॥

कौमुदी—( कण्ठिकां विलोक्य सात्त्विकभावान् नाटयति । पुनः स्वगतं ) (क) इत्तिअकालं तादस्स अणुरोहेण मए अप्पा विडंविदो । इआणिं पुण एदं चेअ नयणमणमहूसवं सत्थवाहं अणुसरिस्सं ।

कुन्दलता—(ख) सत्थवाह ! तेण मणिणा किं पि तुम्हाणं उवकिदं ? ।

मैत्रेयः—कौमुदीहृदयकार्मणं किमपि वस्तु तदानीमेवोपनयता तेन रत्नेन महदुपकृतम् ।

मित्राणन्दः—कुन्दलतिके ! अस्मन्मनःसंग्रहणसत्यङ्कारस्त्वया समुपनीतस्तदानीमसौ मणिविशेषः ।

मैत्रेयः—कुन्दलतिके ! अयमपि तस्य त्वदुपनीतस्य मणेः सत्प्रसादो यदयं महौषधिवलयसुभगम्भविष्णुर्वामेतरो मे बाहुः ।

मित्राणन्दः—( सोत्कण्ठं कौमुदीवदनमवलोक्य ) मैत्रेय !

---

(क) एतावत्कालं तातस्यानुरोधेन मयाऽऽत्मा विडम्बितः । इदानीं पुनरेतमेव नयनमनोमहोत्सवं सार्थवाहमनुसरिष्यामि ।

(ख) सार्थवाह ! तेन मणिना किमपि युष्माकमुपकृतम् ? ।

रात्रिन्दिवं विजयिनो हरिणेक्षणानां
वक्त्रस्य मैत्र्यमनुरुध्य विलाञ्छनस्य ।
नीलोत्पलानि यदि हासमुपाश्रयेयु-
र्जायेत किं वद तदा जडजप्रवादः ? ॥ ८ ॥

कौमुदी—( अपवार्य ) (क) सहि ! अज्ज केणावि कारणेण सत्थवाहकुमारो अमयघडिओ व्व सोहग्गमइओ व्व सुत्तिमउ व्व भयवं पंचबाणो मे लोअणाणं पडिहासदि। ता किं एसो अपुरवो कोऽवि ? ।

कुन्दलता—
(ख) एसो सो चिअ दइएसु घडइ सोहग्गचंगिमगुणाइं ।
चंदो चिअ जणइ वाणीसु कठिणबंधिसु सलिलाइं (?)॥

मित्राणन्दः—प्रिये !
वक्त्रं शीतरुचिर्वचांसि च सुधा दृष्टिश्च कादम्बरी
बिम्बोष्ठः पुनरेष कौस्तुभमणिर्मूर्तिश्च लक्ष्मीस्तव ।
श्रद्धालुर्युगपद्विलोकितुमयं स्वापत्यजातं चिरा-
देकस्थं विरचय्य कुन्दरदने ! त्वामर्णवः सूतवान्॥१०॥

अपि च—

---

(क) सखि ! अद्य केनापि कारणेन सार्थवाहकुमारः अमृतघटित इव सौभाग्यमय इव शुक्तिमय इव भगवान् पञ्चबाणः मम लोचनयोः प्रतिभासते । तत्किमेषोऽपूर्वः कोऽपि ।

(ख) एष स खलु दयितेषु घटयति सौभाग्यचङ्गिमगुणान् ।
चन्द्रः खलु जनयति वाणी.............................. ॥

त्वं कौमुदी सुदति ! गात्रमिदं च पुष्प-
चापाभितापपरिवापनिपीतसौस्थ्यम् ।
अङ्केन ते सुखयतस्तदिदं विधातुः
सर्गक्रमो भगवतो जगतां प्रतीपः ॥ ११ ॥

कौमुदी—( स्वगतं ) ( क ) जं भोदि तं भोदु । अहं एदेण सह गमिस्सं । ( प्रकाशं ) वणनिवासपसाएण मुद्धा खु अहं न विचित्तभणिदीओ जाणामि । एदं उण किं पि संखेवेण मंतेमि । अवरसत्थवाहपडिवत्तिविवरीदाए पडिवत्तीए तुमं पिक्खिस्सं । अओ वरं जं ते पडिहाई तं करिज्जासु ।

मित्राणन्दः—प्रिये कुड्मलाग्रदति ! अपरसार्थवाहानां प्रतिपत्तिं बोधयित्वा किमप्यपरमादिश ।

कौमुदी—(ख) एदं खु अम्हाणं कवडतावसपेडयं ।

मैत्रेयः—ततस्ततः ? ।

कौमुदी—(ग) तदो जो कोऽवि पभूददविणो सत्थवाहो

---

( क ) यद् भवति तद् भवतु । अहं एतेन सह गमिष्यामि । वननिवासप्रसादेन मुग्धा खलु अहं न विचित्रभणितीः जानामि । एतत्पुनः किमपि संक्षेपेण मन्त्रये । अपरसार्थवाहप्रतिपत्तिविपरीतया प्रतिपत्त्या त्वां प्रेक्षिष्ये । अत परं यत्ते प्रतिभाति तत्क्रियताम् ।

( ख ) एतत्खलु अस्माकं कपटतापसपेटकम् ।

( ग ) ततो यः कोऽपि प्रभूतद्रविणः सार्थवाहो भवति तस्याहं परिणेतुं दीये ।

भोदि तस्स अहं परिणेदुं दिज्जामि।

**मित्राणन्दः**—( सौत्सुक्यं ) ततस्ततः ?।

**कौमुदी**—(क ) तदो मए सह कीलिदुं पण्णसालब्भन्तरे उववसंतु चिअ पल्लंकतिरोहिदकूविआए निवडदि।

**कुन्दलता**—( विहस्य ) (ख) एसा सा अवरसत्थवाहाणं पडिवत्ती।

**कौमुदी**—( ग ) अहं उण पुव्वसंचिअं पि दविणं संगहिअ पण्णसालब्भंतरदुवारेण तुम्हेहिं सह समागमिस्सं।

**मित्राणन्दः**—( सरभसं ) ततः परं क गन्तव्यम्?।

**कौमुदी**— ( घ ) सिंहलदीवे गन्तव्वं।

**मित्राणन्दः**—मित्रोऽ(त्रम) प्यावयोस्तत्रैव संघटिष्यते।

**कुन्दलता**—( मित्राणन्दं प्रति )

(ङ) तह कहवि जणो वेसाहिं अत्थलोहेण अत्थि विलविओ।
जह पिम्मभिभलासु वि न तासु वीसासमोअरइ ॥ १२ ॥

---

( क ) ततो मया सह क्रीडितुं पर्णशालाभ्यन्तरे उपवसन् खलु पल्यङ्कतिरोहितकूपिकायां निपतति।

( ख ) एषा साऽपरसार्थवाहानां प्रतिपत्तिः।

( ग ) अहं पुनः पूर्वसंचितमपि द्रविणं संगृह्य पर्णशालाभ्यन्तरद्वारेण युष्माभिः सह समागमिष्यामि।

( घ ) सिंहलद्वीपे गन्तव्यम्।

( ङ ) तथा कथमपि जनो वेश्याभिरर्थलोभेनास्ति विलपितः।

(क) तदो क्खु तुम्हे अवरसत्थवाहपडिवत्तिसवणतरलिदहिदया निसग्गणरपसु [ क्खु ] वि कोमुईवयस्सेसु वीसंभं न करिस्सध ।

मैत्रेयः—कुन्दलतिके ! किमेवं सार्थवाहस्य चातुरीवैमुख्यमुद्भावयसि ? ।

> स्नुहीगवार्कदुग्धानां दृश्यं यदपि नान्तरम् ।
> तथाप्यास्वादपार्थक्यं जिह्वाऽऽख्याति पटीयसी ॥१२॥

कुन्दलता—(ख) सत्यवाह ! तुम्भेहिं अहं सुमरिदव्वा । अहं खु रयणकूडपव्वयतो कोमुईनेहेण इध समागदा वट्टामि ।

मैत्रेयः—( विहस्य ) भद्रे ! अहमपि त्वया कदाचिदुपलक्षणीयः ।

कौमुदी—( मित्राणन्दं प्रति ) ( ग ) अत्थि तादस्स अणुभूदपभावो विसावहारमंतो ।

मित्राणन्दः—ततः किम् ? ।

कौमुदी—( घ ) सो पाणिमोअणापव्वणि अत्थिदव्वो ।

---

यथा प्रेमविह्वलासु अपि न तासु विश्वासमवतरलि ॥

( क ) ततः खलु यूयं अपरसार्थवाहप्रतिपत्तिश्रवणतरलितहृदया निसर्गनरपशुष्वपि कौमुदीवयस्येषु विश्रम्भं न करिष्यथ ।

( ख ) सार्थवाह ! युष्माभिरहं स्मर्तव्या । अहं खलु रत्नकूटपर्वतात् कौमुदीस्नेहेनात्र समागता वर्ते ।

( ग ) अस्ति तातस्यानुभूतप्रभावो विषापहारमन्त्रः ।

( घ ) स पाणिमोचनापर्वणि अर्थयितव्यः ।

मैत्रेयः— आर्ये ! सरलासि । योऽस्मान् जिघांसति स किं मन्त्रमुपनयति ? ।

कौमुदी—(क) पेरन्तमारणनिच्छओ सव्वं पि तादो अणुट्ठिस्सदि ।

( नेपथ्ये )

हंहो बटवः ! प्रगुणितः सर्वोऽपि विवाहमङ्गलविधिः समर्थितकौतुकक्लृप्तं च विवाहवेदीमधिरूढं वधूवरम् ।

कौमुदी—( ख ) कधमेस तादो जंपेदि ? ।

कुन्दलता—( ग ) अज्जे ! वच्च तुमं कोउअमंगलमनुभविदुं । ( पुनर्मित्राणन्दं प्रति ) तुम्हेऽवि गच्छध ।

( कौमुदीमित्राणन्दमैत्रेयाः निष्क्रान्ताः । )

( ततः प्रविशति कुलपतिर्गजपादश्च । )

कुलपतिः—( सनिर्वेदं )

प्रपात्य दन्तानुपनीय जाड्यं
निहत्य संधिस्थलसौष्ठवं च ।
जरा पुनः शैशवमाततान
तथाप्यपायस्पृहयालुचेताः ॥ १४ ॥

---

( क ) पर्यन्तमारणनिश्चयो सर्वमपि तातोऽनुष्ठास्यति ।

( ख ) कथमेष तातः कथयति ? ।

( ग ) आर्ये ! व्रज त्वं कौतुकमङ्गलमनुभवितुम् । यूयमपि गच्छत ।

( नेपथ्ये ) ।

इदानीं सर्वस्यापि कर्मणः पर्यन्तः संजातः ।

गजपादः—(समयमात्मगतं) केयमुपश्रुतिः कुलपतेरनिष्टं सूचयति ? ।

( उपसृत्य कुन्दलता प्रणमति । )

कुलपतिः—वत्से ! गत्वा ब्रूहि आर्यां गन्धमूषिकाम्। यथा, विवाहवेदिकामागत्य वधूवरोचितानि कर्माणि कारय ।

( कुन्दलतिका निष्क्रान्ता । )

( प्रविश्य )

मर्कटवर्णः—भगवन् ! इदानीं सर्वस्यापि कर्मणः पर्यन्तः सञ्जातः । तदागच्छत यूयं येन पाणिग्रहणमाधीयते । ( इति पुरो निधाय विज्ञपयति । )

( सर्वे परिक्रामन्ति । )

मर्कटवर्णः—भगवन् ! इदं वधूवरम् । अयं पुरोधाः । इयं भगवती गन्धमूषिका कुन्दलता च ।

( ततः प्रविशन्ति यथानिर्दिष्टाः सर्वे । )

कुलपतिः—( गन्धमूषिकां प्रति ) आर्ये ! सवरां विवाहवेदीमधिरूढां कौमुदीं वत्सां विलोक्य भाप्तमस्माभिर्जन्मनस्तपःकर्मणश्च फलम् ।

गन्धमूषिका—( सास्रं ) मदीयेन तपसा सतीत्वेन च चिरमविधवा भवतु वत्सा ।

गजपादः—वत्से ! प्रतिगृहाण शिरसा पितृष्वसुराशिषम् ।

( कौमुदी शिरो नमयति । )

पुरोधाः—(कुलपतिं प्रति) अर्घदानपूर्वकं मयच्छ पुत्रीं जामात्रे ।

कुलपतिः—कोऽत्र भोः ! । पाद्यं पाद्यम्, अर्घोऽर्घः ।

( प्रविश्य तुन्दिलः सर्वमुपनयति । )

कुलपतिः—( सास्रं पादौ प्रक्षाल्यार्घमुपनयति ।पुनः सगद्गदं ) वत्स मित्राणन्द ! प्रतिगृहाणास्मत्कुटुम्बदृष्टिचकोरीकौमुदीं पुत्रीं कौमुदीम् ।

( प्रविश्य )

बटुः—(पुरोधसं प्रति) लग्नसमय इदानीम्, ततः समाप्यतां कौतुकविधिः । प्रतिरुध्यतां कोलाहलः । अवधीयतां झल्लरी-झात्कारे ।

( पुरोधाः सरभसमुत्थाय हस्तसंज्ञया कोलाहलं प्रतिरुणद्धि । )

( नेपथ्ये झल्लरीझात्कारः । )

पुरोधाः—पुण्याहं पुण्याहं ( इत्युच्चारयन् वधूवरस्य पाणी योजयति । )

( नेपथ्ये तापस्यो मङ्गलानि गायन्ति । )

( सर्वे सानन्द वधूवरस्य शिरसि दूर्वाक्षतादीनि प्रक्षिपन्ति । )

पुरोधाः—(वधूवरं प्रति) प्रदक्षिणीकुरुतां भगवन्तं परिणयनसाक्षिणमाशुशुक्षणिम् ।

( उभौ तथाकुरुतः । )

कुन्दलतिका—( मित्राणन्द प्रति )

(क) दइएहिं चेअ परंमुहेहिं मयणग्गिभिंभलमणाओ ।
कारिज्जंते कुलबालिआउ गहिलाइं कज्जाइं ॥ १५ ॥

गन्धमूषिका—ततस्तथा कथञ्चिदस्या अभिमुखो भूयाः यथेयं कौलीनं किमपि नाचरति ।

( मित्राणन्दः सलज्जमधोमुखो भवति । )

कुलपतिः—
जामातः ! प्रतिपादिता शुभशतप्रागल्भ्यलभ्या स्वयं
तुभ्यं स्वर्गनितम्बिनीप्रतिनिधिः पुत्री मया कौमुदी ।
पित्रोर्नेत्रमहोत्सवे करतलव्यामोचनापर्वणि
स्वैरं वस्तु यदिष्टमस्ति भवतस्तत्किञ्चिदुर्वृणु ॥१६॥

मित्राणन्दः— ( अञ्जलिं बद्ध्वा ) विषापहारमन्त्रोपदेशेन प्रसीद ।

कुलपतिः—( सावहेलं )
प्रियां प्राणेभ्योऽपि त्वयि विसृजतो वत्स ! तनया-
मदेयं किं नाम स्वमपि विजहासोः कुलपतेः ? ।
किमेतैस्तैः पल्लीजनसमुचितैरक्षरलवै-
रसाध्यं विश्वानामपि किमपि वस्तु स्मर ततः ॥१७॥

गजपादः—
अल्पत्वं च महत्त्वं च वस्तुनोऽर्थित्वमीक्षते ।
ऋष्ये तरक्षुः श्रद्धालुर्न कव्ये त्रिदशां पतिः ॥१८॥

---

(क) दयितै खलु पराङ्मुखैर्मदनाग्निविह्वलमनसः ।
कार्यन्ते कुलबालिका ग्रथिलानि कार्याणि ॥

गन्धमूषिका—भगवन् ! यदभिरुचितं जामात्रे तदस्तु ।

पुरोधाः—मुनीन्द्र ! नार्हसि पवित्रेऽस्मिन् पाणिमोचनापर्वणि जामातुर्वैमनस्यमाधातुम् ।

कुलपतिः—( विमृश्य सविषादम् ) मर्कटवर्ण ! पवित्रय पुष्पोपहारेण ध्यानवेदीम् ।

( मर्कटवर्णस्तथाकरोति । )

( कुलपतिः रसनाबन्धमाधाय [ध्या]नं नाटयति । )

गजपादः—( कर्णं दत्त्वा )

मञ्जीराणि यथा रणन्ति बहलः कोलाहलः खेचरी-
व्रातस्यैष यथा यथा च वियति ज्योतिः समुज्जृम्भते ।
दिव्यः कोऽपि निरर्गलः परिमलः काष्ठाः स्तृणीते यथा
व्यक्तं हन्त ! तथोपसर्पति महीं श्रीजाङ्गुलीदेवता ॥१९॥

कुलपतिः—( ससम्भ्रमं ) स्वस्ति देवतायै ।

देवता—( सविनयं )

श्रीमन्मुनीश्वर ! शिवप्रतिभूः समाधि-
श्चापल्यविप्लवमपास्थत कच्चिदुच्चैः ? ।
सर्वेऽपि किं व्रतभृतः सुखमासतेति ?
किं चाद्य मां किमसि संस्मृतवानकस्मात् ? ॥२०॥

कुलपतिः—( सादरं )

हालाहलहरीं विद्यां वन्द्यां देवैः सदानवैः ।
एतस्मै देवि ! जामात्रे प्रसीद प्रतिपादय ॥ २१ ॥

(देवता मित्राणन्दस्य शिरसि दक्षिणभुजं निधाय कर्णे एवमेव ।)

**मित्राणन्दः**—महाप्रसादः । ( इत्यभिधाय प्रणमति । )

**देवता**—मुनीन्द्र ! व्रजामो वयम् ।

**कुलपतिः**—निष्प्रत्यूहास्त्रिदशसंपदो भूयासुः ।

( देवता तिरोधत्ते । )

( नेपथ्ये )

अस्ताद्रिमाश्रयन्तं प्रदोषसंहृतसमस्तवसुसारम् ।
वोढारं कुलवनितेव मित्रमनुसरति दिनलक्ष्मीः ॥२२॥

**गजपादः**—( साशङ्कमात्मगतं ) कथमयं वटुः संध्यासमयव्यावर्णनाव्याजेन प्रकृष्टदोषघोरघोणापहृतद्रविणसारेण सार्थवाहकुमारेण सह वत्साया गमनं सूचयति ।

**गन्धमूषिका**—( पुरोऽवस्थ प्रति ) रजनिरिदानीम्, पर्णशालाभ्यन्तरमुपैतु वत्सा । पश्यतु अपरसार्थवाहप्रतिपरया जामातरम् ।

**कुलपतिः**—वयमपि तर्हि प्रादोषिकीं सन्ध्यामनुष्ठातुं प्रतिष्ठामहे ।

( इति निष्क्रान्ताः सर्वे । )

॥ तृतीयोऽङ्कः समाप्तः ॥

---

॥ अथ चतुर्थोऽङ्कः ॥

( ततः प्रविशति मित्राणन्दो मूर्धकृतकरण्डा कौमुदी च । )

**मित्राणन्दः**—( समन्ततोऽवलोक्य )

प्राचीनमञ्चति वियत्पृथुशोककोक-
कान्ताकपोलपुलकौपयिकं दिनेशः ।
श्रान्ता इवास्ततटकुट्टिममाश्रयन्ति
राजीवजीवितहृतो हरिणाङ्कपादाः ॥ १ ॥

कौमुदी—( क ) अज्जउत्त ! कित्तिअं अज्जवि गन्तव्वं ? ।

मित्राणन्दः—प्रिये ! महत्यपि मार्गपारे मार्गोदन्वति मास्म विपादनिपादं स्पृहः । मार्गा एव सिंहलद्वीपराजधानीपरिसरभुवम् । यदि च रजनीचरणचङ्क्रमणेनातिचिरं परिश्रान्तासि तदानीमवतार्य शिरसः करण्डमनेकस्तबककदम्बकवर्षेशाखस्य क्रमुकखण्डस्यास्य निरपायासु च्छायासु विनोदय क्षणं प्ररूढगाढस्वेदं [illegible]दम् ।

( कौमुदी तथाकरोति । )

मित्राणन्दः—प्रिये ! नानादेशोद्भवैर्भिन्नयानपात्रैर्व[illegible]भन्यासीकृतस्य विचित्रस्य कनकरत्नाभरणस्य समुद्वहनेन सुचिरमायासितानि बालमृणालकोमलानि तवाङ्गानि । तदहं संवाहयामि ।

कौमुदी—( सलज्जं ) (ख) अज्जउत्त ! अलाहि एदिणा

( क ) आर्यपुत्र ! कियदद्यापि गन्तव्यम् ? ।

(ख) आर्यपुत्र ! अलं एतेन विनयप्रभ्रंशेन । न एष कुलवधूनां प्रशंसनीयो मार्गः । त्वमपि पादविहारक्लेशेन परिश्रान्तोऽसि, तदहं तेऽङ्गसंवाहनं करिष्यामि ।

विणयपब्भंसेण । न एस कुलवहूआणं पसंसणिज्जो मग्गो । तुमं पि पायविहारकिलेसेण परिसंतोऽसि, ता अहं ते अंगसंवाहणं करिस्सं ।

**मित्राणन्दः**—( साश्चर्यमात्मगतं )

न मे गोत्रं वेद प्रकृतिमपि ………………न
स्वभावस्थां किं चोपकृतमपि नास्यां किमपि मे ।
तथाप्येषा बन्धूनमुचदसिताक्षी मम कृते
पुरन्ध्रीणां प्रेमग्रहिलमविचारं खलु मनः ॥ २ ॥

( प्रकाशं )

प्रिये कौमुदि ! दवीयसो देशान्तरादुपगतवतः सर्वथाप्यविज्ञातकुलशीलसंपदः परोक्षप्रेमग्रन्थेर्मम वणिजो निमित्तं चिरमरूढसौहार्दमुद्रोपद्रुतानां बन्धूनामुपहास्यजनकं स्वदेशपरिहारपादविहारशीतवातातपप्रसहनप्रायं क्लेशावेशमतुच्छमुपगच्छन्ती निमीलितनेत्रपत्रा शैलेन्द्रमधिरोहसि । अविद्यमानयानपात्रा महार्णवमवगाहसे । अनासादितजाङ्गुलीप्रसादा पन्नगाधिनाथमुत्कोपयसि ।

**कौमुदी**—(क) अज्जउत्त ! कीस इत्तियं पि सयलमहे-

(क) आर्यपुत्र ! कस्मादेतावदपि सकलमहिलाजनसमानं मम चरितं निरूप्य विस्मयमुपगतोऽसि ? ।

क्षणमात्रदृष्टप्रियजनप्रेमभरोद्विह्वला महिलाः ।
चिरपरिचितानपि मुञ्चन्ति बान्धवानेषा किल प्रकृतिः ॥

लाजणसमाणं मम चरिदं निरूविअ विम्हयमुवगदोऽसि ?।
खणमित्तदिट्ठपिअयणपिम्मभरुब्भिभलाओ महिलाओ ।
चिरपरिचिएऽवि मिल्लंति वधवे एस किर पगिदि ॥ ३ ॥

**मित्राणन्दः**—(स्वगतं)

वीरेषु गणनां पूर्वं परमर्हन्ति योषितः ।
यास्तृणायाभिमन्यन्ते प्राणान् प्रेमान्धचेतसः ॥४॥

**कौमुदी**—किं च-

(क) देसं वयंति विसमं सहंति णिच्चं भमंति दुहिआओ ।
तहवि महिलाण पिम्मं दइयंमि न सयणवग्गंमि ॥५॥
ता अवरं मे भत्तिं निरूवेदु अज्जउत्तो ।

**मित्राणन्दः**—( सविनयं ) प्रिये कौमुदि !

पितृभ्यामाबाल्यादजनि यदनन्तं किमपि ते
प्रियं वा श्रेयो वा तदुपनयने कोऽस्मि कृपणः ? ।
इदं सत्यासत्यं पुनरभिदधे प्रीतिमुखरः
परं कालादस्मात्कृतकनिरपेक्षस्तव जनः ॥ ६ ॥

( कौमुदी सलज्जमधोमुखीभवति । )

**मित्राणन्दः**—( विचिन्त्य सखेदं )

सुखाकरोति संयोगस्तथा न तव कौमुदि ! ।

---

(क) देशं व्रजन्ति विषमं सहन्ते दुःखं भ्राम्यन्ति दुःखिताः ।
तथापि महिलानां प्रेम दयिते न स्वजनवर्गे ॥
तदपरां मे भक्तिं निरूपयत्वार्यपुत्रः ।

मैत्रेयस्य परित्यागो यथा दुःखाकरोति माम् ॥ ७ ॥

कौमुदी—( क ) अज्जउत्त ! अलाहि विसाएण। जधामंतिदं करिस्सदि मित्तेओ। संघडिस्सदि सिंहलदीयचिट्ठाणं अम्हाणं।

मित्राणन्दः—प्रिये ! यद्यपेतश्रमासि तदा नगराभ्यन्तरे गमनाय प्रक्रमस्व ।

( कौमुदी करण्डकमादाय उत्थानं नाटयति । )

( उभौ नगराभिमुखमुपसर्पतः । )

मित्राणन्दः—( सानन्दं ) प्रिये ! पश्य पश्य,

विश्राम्यत्पथिकाः क्वचित्क्वचिदपि क्रीडाचलोपत्यका-
क्रीडत्पौरपुरन्ध्रयो गिरिसरिज्झङ्कारताराः क्वचित् ।
एते ते रमयन्ति कोकिलकुलव्याहारवाचालितो-
द्यानक्षोणिरुहः पुरीपरिसराः श्रोत्राणि नेत्राणि च ॥८॥

( पुरोऽवलोक्य )

धावं धावमयं पुरः पुरजनः किं कान्दिशीको भ्रम-
त्येषोऽपि श्रुतिदुर्भगः प्रतिदिशं हक्कानिनादः कथम्? ।
रुध्यन्तेऽध्वनि किं पदातिपटलैरागन्तवो जन्तवः
कस्मात्कावचिका निकुञ्जकुहराण्याट्टण्वते वाजिभिः ?॥

---

( क ) आर्यपुत्र ! अलं विषादेन । यथामन्त्रितं करिष्यति मैत्रेयः । संघटिष्यते सिंहलद्वीपस्थितानां अस्माकम् ।

[1]भवतु तावत्, एतं सम्मुखीनमापतन्तं प्रवयसं द्विजन्मानमुपसृत्य पृच्छामि।

( ततः प्रविशति द्विजः। )

( मित्राणन्दः प्रणमति। )

द्विजः—स्वस्ति यजमानाय।

मित्राणन्दः—( सविनयं ) आर्य! इदानीमेव देशान्तरतः समुपागतोऽहम्, अतो न विदुरः कस्याप्यत्रत्यवृत्तान्तस्य। तत्कथय केयं पुरी?, कोऽस्यां स्वामी?, किमर्थं च प्रतिरथ्यमाबद्धकवचकञ्चुकैः कैश्चिदाकृष्टकरालकरवालैः कैश्चिदारोपितचापैः कैश्चित्परिघपाणिभिः पत्तिभिः प्रतिरुध्यते स्वेच्छाप्रचारी प्रतिभयचकितेक्षणः प्राणिगणः?।

द्विजः—महाभाग!

इयं सा सिंहलद्वीपभूतधात्रीललाटिका।
श्रीनटीरङ्गशालेव रङ्गशालाभिधा पुरी ॥ १० ॥

मित्राणन्दः—ततस्ततः?।

द्विजः—

द्विषां यशःशीतमयूखराहुर्महीपतिर्विक्रमबाहुरेताम्।
प्रतापपीतद्युतिपीतविश्वरसुन्धरादास्थ्यरुचः प्रशास्ति ॥११॥

[1] कौमुदी—(क) तदो तदो?।

द्विजः—अद्य पुनश्चिरमरूढचौर्योपद्रुतपौरजनोत्तेजितेन राज्ञा निष्ठुरं निर्भर्त्सितः कालपाशनामा पुरीरक्षकस्तस्कर-

(क) ततस्ततः?।

प्रचारं कुतोऽपि विज्ञाय सर्वतो गवेषयितुमारब्धवान्। (इत्यभिधाय निष्क्रान्तः।

**मित्राणन्दः**—( वामाक्षिस्फुरणमभिनीय सभयं ) सांप्रतमपायपिशुनं नः किमप्यशकुनम्। तत्तावद्वहिरेव क्वचिदप्यास्महे यावदयं तस्करोपप्लवः क्वचिदपि विश्राम्यति। तदेहि कृतपुरीपरिसरनिवेशं जीर्णपाषाणसंचयं कात्यायनीनिलयमनुसरामः।

( उभौ परिक्रामतः। )

**मित्राणन्दः**—प्रिये! तदिदं पश्य,

केतुस्तम्भविलम्बिमुण्डमभितः सान्द्रान्त्रमालाञ्चित-
द्वारं शोणितपङ्किलाङ्गणमदन्मार्जारिभीष्मान्तरम्।
गोपुच्छोत्थितदीपमश्मकुहरक्रोडमलुप्तोल्वण-
व्यालं दुर्दरदाहधूमविधुरं कात्यायनीमन्दिरम्॥ १२॥

( कौमुदी विलोक्य वेपते। )

**मित्राणन्दः**—प्रिये! अन्धकारप्राग्भारदुर्लक्ष्यविषमा चण्डिकायतनप्रदेशपदवी ततो मत्पृष्ठलग्ना प्रविश।

( उभौ मध्यप्रवेशं नाटयतः। )

**मित्राणन्दः**—( कतिचित्पदानि दत्त्वा विलोक्य च ) कथमयमभ्यन्तरे करकलितासिधेनुः प्रतिभयतरलेक्षणः कोऽपि पुरुषः?।

( कौमुदी पलायितुमिच्छति। )

**मित्राणन्दः**—(उच्चै स्वरं) भो महापुरुष! मा भैषीः। इदानीमेव देशान्तरतः समायातो वणिगहम्, न पुनस्तस्करो

वा घातको वा, तदास्स्व यथासुखम् । (पुनर्विलोक्य) कथमयं पाषाणसन्धिविवरेण निःसृत्य बहिर्गतवान् ? । भवतु, तर्हि गर्भगृहावस्थितां भट्टारिकां विलोकयामः । (विलोक्य) प्रिये ! पश्य पश्य,

नेत्रश्रोत्रकरौष्ठबाहुचरणघ्राणादिभिः प्राणिनां
मन्त्रैः क्लृप्तबलिर्वसारसकृतस्नानान्त्रमालार्चिता ।
कण्ठस्थोरगलिह्यमानबहलप्लीहाङ्गरागागल-
द्रक्तार्द्रार्द्रनरेन्द्रकृत्तरसनोत्तंसा मृडानी पुरः ॥ १२ ।

( कौमुदी उत्तरीयाञ्चलेन नासां पिधाय सजुगुप्सं निध्यायति ।

मित्राणन्दः—प्रिये ! क्वचिदपि प्रदेशे विमुञ्च द्रविणक(र)ण्डकम् ।

कौमुदी—( करण्डकं विमुच्य ) ( क ) अज्जउत्त इआणिं केणावि कारणेण मह सरीरंमि महंतो उव्वेगो ।

मित्राणन्दः—प्रिये ! मार्गपरिलङ्घनेनापि तावदतित(रां) परिश्रान्तासि । पुनः कात्यायनीप्रतिभयमप्यभूत्, तत(श्च) वपुषि समुद्वेगः । तन्मास्म किमपि विरूपमाशङ्किष्ठाः ।

( नेपथ्ये )

( ख ) एसा चोलपदपद्धइ कच्चायणीभुवणं पविट्ठा (।) अओ वलं लायपुत्ते पमाणं ।

---

(क) आर्यपुत्र ! इदानीं केनापि कारणेन मम शरीरे महानुद्वेग(ः) ।

(ख) एषा चोरपदपद्धतिः कात्यायनीभुवनं प्रविष्टा । अत(ः) प(रं) राजपुत्रः प्रमाणम् ।

मित्राणन्दः—( आकर्ण्य सभयं ) यथायमानुपदिकस्य व्याहारः तथा जाने योऽयं करकलितासिधेनुर्निःसृत्य गतः, व्यक्तमसौ चौरः । तदिदानीं तस्करस्थानोपलब्धैरस्माभिः किमनुष्ठेयम् ? ।

( कौमुदी कम्पते । )

( नेपथ्ये )

इहैव पदपद्धतिर्विशति पार्वतीमन्दिर
तदत्र बहिरास्यतां निभृतवृत्तिभिः पत्तिभिः ।
अयं स धृतजीवितः परगृहाद्दलुण्टाभ्रणो
नियम्य परिगृह्यतां द्रविणघस्मरस्तस्करः ॥ १४ ॥

( कौमुदी मूर्छामभिनयति । )

( नेपथ्ये )

भो भोः पदातयः ! कृतावधानैर्मध्ये प्रवेष्टव्यम्, अपि नाम दस्युः प्रहारमादधीत ।

मित्राणन्दः—(विलोक्य) सपरिकरः प्राप्तः पुरीरक्षकः ।

(ततः प्रविशति कालपाशः दीर्घदंष्ट्रवराहतुण्डप्रभृतिकश्च परिवारः।)

कालपाशः—दीर्घदंष्ट्र ! [ मध्य ] मवलोकय ।

दीर्घदंष्ट्रः—( विलोक्य ) राजपुत्र ! अस्ति किमपि मानुषमभ्यन्तरे ।

कालपाशः—( सक्रोधमुच्चैःस्वरं ) ।

मुषित्वा पौराणां नवकनकमाणिक्यघटितां-
श्रियं काञ्चीचूडामणिमुकुटताडङ्ककटकान् ।

क्व रे यासि क्षुद्र ! द्रुततरमगाराद्व्रज बहिः
स्वयं क्रुद्धस्तुभ्यं पितृपतिरिदानीं न भवसि ॥ १५ ॥

मित्राणन्दः—प्रिये ! उत्तिष्ठोत्तिष्ठ, प्राप्ता राजपदातयः।

( उभौ वहिर्भवतः । )

( कौमुदी परिधानपटेन करण्डकं पिदधाति । )

कालपाशः—( साक्षेपं ) अरे ! कस्त्वमसि ? ।

मित्राणन्दः—( सकम्पं ) राजपुत्र ! पथिकोऽहम् ।

कालपाशः—इयं वनिता का ? ।

मित्राणन्दः—मम सधर्मिणीयम् ।

कालपाशः—बाले ! करण्डिकायां किमस्ति ? ।

कौमुदी—( सकम्पं ) (क) संवलयं किं पि अत्थि ।

वराहतुण्डः—(करण्डिकामुत्पाट्य विमुच्य च कालपाशं प्रति) प्रभूतद्रविणसारभारेण न शक्यते समुत्पाटयितुम् ।

कालपाशः—( सोपहासं ) बाले ! शम्बलस्य किमियान् भारः ?, मध्यस्थिता चौर्यं कारयसि ? ।

कौमुदी—(ख) ताद ! अहं चोरिअं सिविणेऽवि न पिच्छामि।

कालपाशः—प्रत्यक्षमपि पश्यन्ती स्वप्ने न किं करिष्यसि ? । ( पुनः सावहित्थं ) दीर्घदंष्ट्र ! विधेहि किमप्यस्य समयोचितमातिथ्यम् ।

---

(क) शम्बलकं किमप्यस्ति ।

(ख) तात ! अहं चौर्यं स्वप्नेऽपि न पश्यामि ।

( दीर्घदंष्ट्रो यष्टिना प्रणिहन्तुमारभते । )

( कौमुदी सपूत्कारमन्तरा निपतति । )

कालपाशः—वनितायां प्रहारः प्रयत्नतो रक्षणीयः ।

मित्राणन्दः—राजपुत्र ! भिन्नयानपात्रो वणिगहमुद्वरितशेषं किमपि द्रविणमादाय स्वनगरं प्रति प्रचलितः । ततो वृथातस्करापवादेन किं मां विगोपयसि ? । चौर्यचिह्नं किमप्युपदिश्य साक्षिणं वा कमप्युपस्थाप्य गृहाण वा मुषाण वा बधान वा ।

कालपाशः—आभरणकरण्डकादप्यपरं किं नाम चौर्यचिह्नम् ? ।

मित्राणन्दः—राजपुत्र ! ममैव द्रविणमत्र करण्डके ।

कालपाशः—सर्वमपि राज्ञः पुरतो वक्तव्यम् ।

मित्राणन्दः—( सदुःखमात्मगतं )

यत्पोतस्य सुवर्णमौक्तिकनिधेर्भङ्गो वियोगो निजै-
र्यन्मातृपितृभिर्विदेशवसतिर्येयं न तद्बाधते ।
मिथ्या यः पुनरिन्दुशुभ्रयशसो गोत्रस्य लक्ष्मैकभू-
रैकागारिकविप्लवः मतिमुहुर्दुःखाकरोत्येष माम् ॥१६॥

कौमुदी—( सदैन्यं पादौ संस्पृश्य ) (क) ताद ! मेल्लेहि मे निरवराहं भत्तारं । देहि पइभिक्खं ।

कालपाशः—( साक्षेपं ) आः पापे ! तस्करपति ! दूरस्थिता ब्रूहि । माऽमानुपस्पृश ।

(क) तात ! मुञ्च मे निरपराधं भर्तारम् । देहि पतिभिक्षाम् ।

( कौमुदी सबाष्पमधोमुखीभवति । )

कालपाशः—( विमृश्य ) कोऽत्र भोः ! ।

( प्रविश्य )

वज्राङ्कुरः—( क ) एसो म्हि । आणवेदु लायउत्तो ।

कालपाशः—अरे वज्राङ्कुर ! वादय वध्यपटहम्, उप नय सरासभं श्वपाकम् ।

(ख) जं आणवेदि सामी । (इत्यभिधाय वज्राङ्कुरो निष्क्रान्तः ।

( नेपथ्ये दु ध्वो वध्यपटहध्वनिः । )

कालपाशः—वराहतुण्ड ! प्रलम्बय तस्करस्य केशान् मंदानय भूमौ ।

( वराहतुण्डस्तथाकरोति । )

( कौमुदी तारस्वरं प्रलपति । )

मित्राणन्दः—प्रिये !

मा विषीद कृतं बाष्पैः फलं मर्षय कर्मणाम् ।
सत्यं विषादशोकाभ्यां न दैवं परिवर्तते ॥ १७ ॥

( प्रविश्य सरासभः )

श्वपाकः—( ग ) एशे म्हि । आणवेदु शामी ।

कालपाशः—अरे खङ्किल ! प्रसाधय रक्तचन्दनेन तस्करस्य शरीरम् । निक्षिप शरावमालां कण्ठे ।

---

( क ) एषोऽस्मि । आज्ञापयतु राजपुत्रः ।

( ख ) यदाज्ञापयति स्वामी ।

( ग ) एषोऽस्मि । आज्ञापयतु स्वामी ।

मार्गे कियन्तमपि सैन्यहृतो यियासुः
श्रीसिंहलावनिवधूपरमेश्वरोऽयम् ॥ २ ॥

ततो गत्वा ब्रूहि गजसैन्याधिपतिं पुण्डरीकम् । यथा करटिघटां प्रगुणय, विशेषतश्च जयमङ्गलाभिधानं गजराजम् । हरिषेणं च वाजिसैन्याधिपतिं वाजिसेनासंनाहनाय समादिश ।

( शिखण्ड प्रणम्य निष्क्रान्तः । )

( नेपथ्ये )

इत इतः सिंहलेश्वरः ।

कामरतिः—कथमयमास्थानमुपसर्पति देवः ? ।

( प्रविश्य राजा सिंहासनमलङ्करोति । )

( अमात्यः प्रणमति । )

राजा—अमात्य ! प्रवर्तितः प्रविशतो वत्सस्य नगर-[प्रवेश] महोत्सवः ? ।

कामरतिः—अथ किम् ? ।

( प्रविश्य )

प्रतीहारः—देव ! रत्नाकरनगराधिवासिना विजयवर्मणा मण्डलेश्वरेण प्रेषितः पुरुषो द्वारि वर्तते ।

राजा—( साशङ्क ) शीघ्रं प्रवेशय ।

( प्रविश्य पुरुषः प्रणमति । )

राजा—( साक्षेपं ) अरे करभक ! प्रस्थितो विजयवर्मा समूलकाषं कषितुं दुरात्मानं चक्रसेनम् ? ।

पुरुषः—देव ! प्रस्थानमेव विज्ञपयितुं सिंहलद्वीपपरमे-

श्वरपादानां विजयवर्मणा मण्डलेश्वरेण प्रेपितोऽस्मि ।

**राजा**—दुरुच्छेदः खलु दुरात्मा चक्रसेनः । ततस्त्वया समग्रसामग्रीकेण योद्धव्यमिति गत्वा समादिश विजयवर्माणम् ।

( पुरुषः प्रणम्य निष्क्रान्तः । )

**राजा**—( विमृश्य ) अमात्य !

आकर्ण्यागमनं वयं स्वनगराद्वत्सस्य लक्ष्मीपतेः
सर्वाङ्गीणसुधानिषेकसुभगामास्वादयामो दशाम् ।
कामं वाममिदं स्फुरत्यविरतं नेत्रं च गात्रं च नः
कोऽयं नाम परस्परप्रतिहतः सर्गक्रमो वेधसः ? ॥२

**कामरतिः**—प्रभञ्जनप्रकोपप्रभवानामङ्गस्फुरणानां शुभाशुभोदर्केषु को नाम विश्रम्भः ? ।

( नेपथ्ये वध्यपटहध्वनिः । )

**राजा**—अमात्य ! महोत्सवदिने किमिदम् ? ।

( प्रविश्य )

**प्रतीहारः**—वर्धसे देव ! वर्धसे, प्राप्तः कालपाशेन नगर[१]लुण्टाकस्तस्करः ।

**राजा**—क्वासौ क्वासौ ? ।

( ततः प्रविशति कालपाशेन केशैर्गृहीतो मित्राणन्दः मूर्धकृतकरण्डिका कौमुदी च । )

**राजा**—( साश्चर्यं ) अमुना नेत्रसुधाञ्जनैकसुहृदाप्याकारेण चौर्यकरणम् । अहो ! विचित्रः कर्मणां विपाकः ।

१ ख–'निजस्य नग–' इति पाठः ।

कामरतिः—( कौमुदीमवलोक्य साभिलाषमात्मगतं )

कामं कामं कुसुमधनुषोऽप्यावहन्ती सशोके
लोकेऽप्यस्मिन् यदि मृगदृशामीदृशी रूपलक्ष्मीः ।
क्लेशाकीर्णे तपसि विपुलस्वर्गभोगोत्सुकानां
मन्दीभूता खलु तदधुना प्राणभाजां प्रवृत्तिः ॥ ४ ॥

राजा—( साक्षेपं )

रे रे तस्कर ! कस्तवात्र जनकः ? कः सोदरः ? कः सुतः ?
कस्त्राता ? किमु मित्रमस्ति ? सदनं ते कुत्र ? के बान्धवाः ?।
कस्येयं कुसुमेषुकेलिसरसी सर्वाङ्गरम्या प्रिया ?
केनाथ व्यसनेन विह्वलमना मुष्णासि नः पत्तनम् ? ॥ ५ ॥

मित्राणन्दः—( सभयं ) देव ! समुद्रोपजीवी मित्राणन्दनामा वणिगहं उद्धरितशेषं कियदपि द्रविणमादाय स्वनगरं प्रति प्रचलितः । अथ च मे देव एव त्राता पिता बान्धवो वा । इयं च मे सधर्मचारिणी । नगरमहं मुष्णामि न वा ? इत्यत्र देवैः प्रमाणम् ।

राजा—अरे कालपाश ! करण्डकाभ्यन्तरमवलोकय ।

कालपाशः—( विलोक्य ) देव ! एतानि सप्त कुण्डलानि, त्रयोदश मञ्जीराणि, एते चैकविंशतिरङ्गदाः, सप्तदश चूडामणयः । अपरस्य पुनर्वर्जप्रायस्य रत्नसमूहस्य न शक्यते संख्यानमाधातुम् ।

---

१ ख–'अत्र' इति । २ क 'माता' इति । ३ ख–'दैवं' इति । ४ ख–' एतस्य ' ।

श्वरपादानां विजयवर्मणा मण्डलेश्वरेण प्रेषितोऽस्मि ।

राजा—दुरुच्छेदः खलु दुरात्मा चक्रसेनः । ततस्त्वया समग्रसामग्रीकेण योद्धव्यमिति गत्वा समादिश विजयवर्माणम् ।

( पुरुषः प्रणम्य निष्क्रान्तः । )

राजा—( विमृश्य ) अमात्य !

आकर्ण्यागमनं वयं स्वनगराद्वत्सस्य लक्ष्मीपतेः
सर्वाङ्गीणसुधानिषेकसुभगामास्वादयामो दशाम् ।
कामं वाममिदं स्फुरत्यविरतं नेत्रं च गात्रं च नः
कोऽयं नाम परस्परप्रतिहतः सर्गक्रमो वेधसः ? ॥३॥

कामरतिः—प्रभञ्जनप्रकोपप्रभवानामङ्गस्फुरणानां शुभाशुभोदर्केषु को नाम विश्रम्भः ? ।

( नेपथ्ये वध्यपटहध्वनिः । )

राजा—अमात्य ! महोत्सवदिने किमिदम् ? ।

( प्रविश्य )

प्रतीहारः—वर्धसे देव ! वर्धसे, प्राप्तः कालपाशेन नगरलुण्टाकस्तस्करः ।

राजा—कासौ कासौ ? ।

( ततः प्रविशति कालपाशेन केशैर्गृहीतो मित्राणन्दः मूर्धकृतकरण्डिका कौमुदी च । )

राजा—( साश्चर्यं ) अमुना नेत्रसुधाञ्जनैकसुहृदाप्याकारेण चौर्यकरणम् । अहो ! विचित्रः कर्मणां विपाकः ।

---

१ ख–'निजस्य नग–' इति पाठः ।

राजा—अरे कालपाश ! कुत्र प्रदेशे कथं चायं प्राप्तः ? ।

कालपाशः—आनुपदिकेनार्पितश्चण्डिकायतने प्रतिगृहीतः।

राजा—( विमृश्य ) तं त्वरिततरमानुपदिकमाकारय ।

( प्रविश्य )

आनुपदिकः—( क ) एस म्हि ।

राजा—अरे ! अयं तस्करः त्वया पदानुसारेण समुपनीतः ? ।

आनुपदिकः—( मित्राणन्दपदान्यवलोक्य ) (ख) भट्टा ! अन्नालिशा शा पदपद्धइ जा कच्चायणीभुवणं पविट्ठा ।

राजा—अमात्य ! किमिदम् ? ।

कामरतिः—देव ! अयमपि चौरः, यस्य च पदपद्धतिः कात्यायनीभुवनं प्रविष्टा सोऽपि चौरः । महदिदं देवस्य नगरम्, संभवन्ति भूयांसो दस्यवः ।

राजा—( कौमुदीं प्रति )

वक्त्रं पात्रं लवणमधुनः पद्महृद्यौ च पाणी
वाणी स्वादुश्चकितहरिणीहारिणी नेत्रपत्रे ।
लज्जासज्जा स्थितिरविकृतिर्भूरिसत्त्वं महत्त्वं

---

( क ) एषोऽस्मि ।

( ख ) भर्तः ! अन्यादृशा सा पदपद्धति या कात्यायनीभुवनं प्रविष्टा ।

१ ख–' एसो म्हि ' इति । २ क–' भट्टा ! अन्नालिसा ' । ३ ख–' पविट्ठा ' ।

राजा—भद्रे ! त्वदीयमेतदाभरणम् ? ।

कौमुदी—( सलज्जं ) ( क ) अत्र इं ? ।

राजा—अमात्य !

दम्पत्योरियमाकृतिरियं च वाचां दशां च विनिवेशः ।
पिशुनयति साधुभावं चौर्यं तु करण्डको वदति ॥ ६ ॥

कामरतिः—देव ! मा शङ्किष्ठाः । तस्कर एवायम् । कथमपरथा विषमसंस्थयोऽयं नेपथ्यप्रकारः ? ।

राजा—( कौमुदीं विलोक्य )

अस्याः सरोरुहदृशः सततोदयं च
निर्लाञ्छनं च विरचय्य मुखं विधातुः ।
खण्डोदयं च जनविश्रुतलाञ्छनं च
चन्द्रं पुनर्घटयतो विदितो विचारः ॥ ७ ॥

कामरतिः—( साभिलाषं ) देव !

अज्ञातलक्ष्मणि सदोदयवृत्तभाजि
पूर्वं सरोरुहदृशां घटिते मुखेन्दौ ।
ारूप्यदूपणभयाद्विधिनायमिन्दुः
पक्षक्षयी च घटितः स्फुटलाञ्छनश्च ॥ ८ ॥

( पुनः स्वगतं ) विफल एव ममावतारो यदनया सह न क्रीडामि।

---

( क ) अथ किम् ? ।

१ ख–' दिशति ' ।

**राजा**—अरे कालपाश ! कुत्र प्रदेशे कथं चायं प्राप्तः ? ।

**कालपाशः**—आनुपदिकेनार्पितश्चण्डिकायतने प्रतिगृहीतः।

**राजा**—( विमृश्य ) तं त्वरिततरमानुपदिकमाकारय ।

( प्रविश्य )

**आनुपदिकः**—( क ) एसं म्हि ।

**राजा**—अरे ! अयं तस्करः त्वया पदानुसारेण समुपनीतः ? ।

**आनुपदिकः**—( मित्राणन्दपदान्यवलोक्य ) (ख) भट्टा ! अन्नालिशा शा पदपद्धइ जा कच्चायणीभुवणं पविट्ठा ।

**राजा**—अमात्य ! किमिदम् ? ।

**कामरतिः**—देव ! अयमपि चौरः, यस्य च पदपद्धतिः कात्यायनीभुवनं प्रविष्टा सोऽपि चौरः । महदिदं देवस्य नगरम्, संभवन्ति भूयांसो दस्यवः ।

**राजा**—( कौमुदीं प्रति )

वक्रं पात्रं लवणमधुनः पद्महृद्यौ च पाणी
वाणी स्वादुश्चकितहरिणीहारिणी नेत्रपत्रे ।
लज्जासज्जा स्थितिरविकृतिर्भूरिसत्त्वं महत्त्वं

---

( क ) एषोऽस्मि ।

( ख ) भर्तः ! अन्यादृशा सा पदपद्धति या कात्यायनीभुवनं प्रविष्टा ।

१ ख–' एसो म्हि ' इति । २ क–' भट्टा ! अन्नालिसा ' । ३ ख–' पविट्ठा ' ।

तत्त्वं तत्त्वं कथय ननु नः कासि? कस्यासि पत्नी?॥९॥

१ कौमुदी—( सलज्जं ) ( क ) देव! वणिअस्स दुहिआ। एदस्स वहुआ।

कामरतिः—देव! नेयमस्य पत्नी। किमुतानेन कुतोऽप्यपहृत्य मन्त्रेण वा तन्त्रेण वा व्यामोहिता, तदियं मुहुर्मुहुरेतदनुकूलं व्याहरति।

राजा—( विमृश्य ) अरे कालपाश! पौरानाह्वय।

( प्रविश्य कृतोष्णीषाः सताद्या वणिजः प्रणमन्ति। )

राजा—उपलक्ष्योपलक्ष्य प्रतिगृह्णीत यूयं स्वं स्वमाभरणं द्रविणं च।

२ वणिजः—( विलोक्य ) ( ख ) भट्टा! न इत्थ अम्हाणं आभरणं वा दविणं वा किं पि अत्थि।

राजा—अमात्य! न तावदमुनाऽस्मत्पौराणां किमप्यपहृतम्। देशान्तरतस्करनिग्रहे तु के वयम्?।

कामरतिः—( स्वगतं ) न नामास्मिंस्तस्करे जीवति ममेयं कथंचिदपि वनिता संपद्यते तदयं यथाकथंचिदपि व्यापादयितव्यः। भवतु। ( प्रकाशं ) देव! निश्चयेन तावदयं चौरः। सांप्रतमेव चायमायातस्ततः पौराणां किमपि नोपकृतवान्। अतः परं पुनः सर्वमपि शनैः शनैरुपकुर्यात्।

( क ) देव! वणिजो दुहिता। एतस्य वधूः।

( ख ) भर्तः! नात्रास्माकं आभरणं वा द्रविणं वा किमप्यस्ति।

१ ख 'निग्रहेषु'। २ ख 'न चास्मिन्'।

चौरश्च राज्ञां स्वदेशजो परदेशजो वा वध्य एव । ( पुनरपवार्य ) इदं धनं इयं स्त्री च देवपादानामभ्यर्णे विश्राम्यतु । चौरस्य पुनः प्रतिविधानं कालपाशः कुरुताम् ।

राजा—( कालपाशं प्रति ) यदभिधत्ते मन्त्री तदनुष्ठेयम् ।

( कामरतिः कालपाशस्य कर्णे एवमेव । )

( कालपाशः साक्षेपं मित्राणन्दं केशैर्गृह्णाति । )

( नेपथ्ये करुणध्वनिः । )

राजा—( सभयमाकर्ण्य ) अमात्य ! किमिदम् ? ।

( प्रविश्य )

चेटी—( सोरस्ताडं ) ( क ) भट्टा ! मुसिद म्हि मुसिद म्हि ।

राजा—चतुरिके ! विश्रब्धमभिधीयताम् ।

टी—( ख ) भट्टा ! देवी पत्तलेहा विण्णवेदि ।

—त्वरिततरं विज्ञपय किमादिशति देवी ? ।

—( ग ) कुमारो लच्छीवई उज्जाणे कुसुमावचयं भुअंगमेण दट्ठो विवैन्नो अ एदं देवी विण्णवेदि ।

—हा वत्स शशाङ्ककुलप्रदीप ! कामिमां दुरवस्था-

( क ) भर्तः ! मुषिताऽस्मि मुषिताऽस्मि ।

( ख ) भर्तः ! देवी पत्रलेखा विज्ञपयति ।

( ग ) कुमारो लक्ष्मीपतिरुद्याने कुसुमावचयं कुर्वाणः भुजङ्गमेन दष्टो विपन्नश्च एतद् देवी विज्ञपयति ।

१ क-' विश्रय ' । २ ख-'विन्नवेदि' । ३ ख-' विवन्नो ' ।

तत्त्वं तत्त्वं कथय ननु नः कासि ? कस्यासि

कौमुदी—( सलज्जं ) ( क ) देव ! वणिअस्स एदस्स वहुआ ।

कामरतिः—देव ! नेयमस्य पत्नी । किन्तु ऽप्यपहृत्य मन्त्रेण वा तन्त्रेण वा व्यामोहिता, तां रेतदनुकूलं व्याहरति ।

राजा—( विमृश्य ) अरे कालपाश ! पौरान

( प्रविश्य कृतोष्णीषाः ससाष्टा वणिजः प्रणमं

राजा—उपलक्ष्योपलक्ष्य प्रतिगृह्णीत यूयं रणं द्रविणं च ।

वाणिजः—( विलोक्य ) ( क ) भट्टा ! न इ आभरणं वा दविणं वा किं पि अत्थि ।

राजा—अमात्य ! न तावदमुनाऽस्मत्पौराण हृतम् । देशान्तरतस्करनिग्रहे त के वयम् ? ।

कालपाशः—अमात्य ! तस्करोऽयं राजानं विज्ञपयितुमिच्छति ।

कामरतिः—(साक्षेपं) इदानीं विज्ञापनायाः कः समयः ? ।

राजा—अमात्य ! किमभिधत्ते चौरः ? ।

कालपाशः—देव ! तस्करोऽयं राजानं विज्ञपयितुमिच्छति ।

राजा—व्यापाद्यमानो लभते विज्ञापनावेलां तदयं विज्ञपयतु वराकः ।

मित्राणन्दः—अस्ति देव ! नः कुलक्रमागतो विषापहारमन्त्रः ।

कामरतिः—अरे ! म्रियमाणः कुशकाशानवलम्बसे ।

राजा—महाभाग ! भूयोऽप्येतान्येवाक्षराणि श्रावय ।

मित्राणन्दः—अस्ति नः कुलक्रमागतः शतशो दृष्टप्रत्ययो विषापहारमन्त्रः ।

राजा—( प्रणम्य ) परमेश्वर ! तर्हि प्रसीद । प्रयच्छास्मत्कुलाय प्राणभिक्षाम् । अरे कालपाश ! द्रुततरमपनय बन्धनानि ।

( कालपाशस्तथाकरोति । )

( मित्राणन्द आसनविशेषमाधाय ध्यानं नाटयति । )

( आकाशे )

ब्रूहि भोः ! ब्रूहि, किमर्थं मां स्मृतवानसि ? ।

सर्वे—( ऊर्ध्वमवलोक्य सविस्मय ) कथमियं भगवती विषदेवता जाङ्गुली स्वयं व्याहरति ? ।

मित्राणन्दः—( प्रणम्य ) भगवति ! यदि मया प्रसा-

दिताऽसि तदा युवराजमुत्थापय ।

( आकाशे )

उत्तिष्ठ भोः ! उत्तिष्ठ ।

कुमारः—( ससंभ्रममुत्थाय ) कथमयमियान् जनसंमर्दः?। अम्ब ! किमद्य तातदर्शनमहोत्सवे शोकदुर्दिनान्धकारितवदनासि ? । प्रयतस्व व्रजामस्तात पादान् प्रणन्तुम् ।

राजा—( सानन्दं सबाष्पं )

एह्येहि वत्स ! शीतांशुवंशमुक्तावचूल ! माम् ।
दोर्भ्यां मृणालमित्राभ्यामालिङ्ग पितरं निजम् ॥ ११ ॥

कुमारः—कथं नेदीयांस एव तातपादाः ? । ( उत्थाय प्रणमति । )

( राजा आलिङ्ग्य शिरसि चुम्बति । )

कुमारः—( मित्राणन्दमवलोक्य ) तात ! वध्यनेपथ्यधारी राजसदसि कोऽयम् ? ।

राजा—महदस्य चरितमनाख्येयमिदानीं पवित्रे भवत्संपर्कपर्वणि । ( पुनः सविनयं मित्राणन्दं प्रति )

त्वमेवास्य स्वामी त्वमसि जनकस्त्वं च जननी
गुरुस्त्वं बन्धुस्त्वं त्वमसि परमं मित्रमपि च ।
त्वया येनाकृष्टस्त्रिभुवनजनग्रासरभस-
प्रवेल्लज्जिह्वाग्रात्प्रसभमयमास्यात्पितृपतेः ॥ १२ ॥

( मित्राणन्दः सलज्जमधोमुखो भवति । )

राजा—( अमात्यं प्रति )

प्राणानेष सुताय नः प्रवितरन् निःशेषमस्मत्कुलं
प्राणैः प्रीणितमावहत्यविलसत्कारुण्यपुण्याकृतिः ।
तत्किं वस्तु तदस्ति किञ्चन पुरो ब्रह्माण्डभाण्डोदरे ?
येनानृण्यममुष्य विश्वजनतारत्नस्य यामो वयम् ॥ १३ ॥

तत्तावदेतौ जम्पती स्ववेश्मनि नीत्वा प्रसादय अस्मन्निर्विशेषेण गौरवविशेषेण यावन्निजनगरं प्रति प्रस्थाप्येते ।

कामरतिः—( स्वगतं ) प्रियं नः ।

राजा—वयं च कुमारेण सह सुखदुःखवार्तां विधातुं मध्यं प्रविशामः ।

( इति निष्क्रान्ताः सर्वे । )

॥ पञ्चमोऽङ्कः समाप्तः ॥

---

॥ अथ षष्ठोऽङ्कः ॥

( ततः प्रविशति मङ्गलकः । )

मङ्गलकः—( साश्चर्यं )

समुद्रे पतितस्यापि क्षिप्तस्यापि नभस्तलात् ।
पुनः संपद्यते लक्ष्मीर्यदि प्राणैर्न मुच्यते ॥ १ ॥

कथमपरथा तथाविधे त्रिलोकीप्रतिभयैकरसे महति पररायमहार्णवे विपक्षक्षितिपालकरालकरवालप्रहारैर्विजयव-

---

१ ख–' नभस्थलात् ' इति पाठः ।

र्मणः प्रत्यङ्गं व्रणेन वैशसम् ?, कथं चाकाण्डसंघटितपान्थप्रव-र्तितौषधद्रवोपलेपेन तदात्व एव व्रणश्रेणीसंरोहणम् ? । सर्व-थाप्यपारव्यसनकान्तारपतितेनापि प्रेक्षापूर्वकारिणा प्राणिना न विषादवैधुर्यमाधेयम् । भवतु, यथादिष्टमादधामि । ( पुरोऽवलोक्य ) कथमयमितः परापतति मदनकः ? ।

( प्रविश्य )

मदनकः—आर्य ! क्व प्रस्थितोऽसि ? ।

मङ्गलकः—अद्य किल रत्नाकराभ्यन्तरे विपक्षसौप्तिकोपनिपातकिंवदन्ती। ततः सैनिकावधानदानाय विजयवर्मणा मण्डलेश्वरेण प्रेषितोऽस्मि

मदनकः—आर्य ! आमूलतः संपरायसंरम्भं श्रोतुमिच्छामि ।

मङ्गलकः—देवस्य विक्रमबाहोरादेशेन चक्रसेनमुत्पाटयितुं विजयवर्मा प्रस्थित इति तवापि प्रतीतमेव । अनन्तरं च—

क्षुण्णासु कोटिषु मदान्धदृशां भटानां
नष्टे द्विपेन्द्रतुरगोद्धुरपत्तिसैन्ये ।
अन्योन्यमुद्यतकृपाणकठेवकुन्तौ
योद्धुं स्वयं परिवृढौ रभसात्प्रवृत्तौ ॥ २ ॥

मदनकः—( ससंभ्रमं ) ततस्ततः ? ।

मङ्गलकः—अनन्तरं च चक्रसेनः प्राणापहारिभिर्निशातहेतिभिर्विजयवर्माणं सर्वाङ्गीणमभिहतवान् ।

१ क—' प्रतियाचितौषधराजशल्येन ' इति । २ क—'तथा—' ।

**मदनकः**—( सभयं ) ततस्ततः ? ।

**मङ्गलकः**—ततः प्रहृतसर्वाङ्गीणमर्माणं कण्ठगतप्राणं विजयवर्माणं विलोक्य विषादी निषादी शनैः शनैः गजराजं प्रतिनिवर्त्य स्वं शिबिरमायातवान् ।

**मदनकः**—अहह ! विक्रमबाह्वोः प्रतापक्षयः । ( पुनर्विमृश्य ) आर्य ! कोऽयं द्विजातिर्मैत्रेयः ?, कथं च विजयवर्मणे संघटितवान् ? । ।

**मङ्गलकः**—अयं किल वैदेशिकः सैनिकैर्भ्रमद्भिर्विपक्षप्रणिधिरिति मन्वानैः संगृह्य विजयवर्मणे समुपनीतः । विजयवर्मणा च प्रहारप्रसूतप्रभूतवेदनामूर्छालेन तदात्व एव व्यापादयितुमादिष्टः ।

**मदनकः**—ततस्ततः ? ।

**मङ्गलकः**—ततो मास्म मां व्यापादयः । तवाहं महान्तमुपकारमाधास्यामीत्यभिधाय मैत्रेयः केनाप्यौषधद्रवेणोपलिप्य विजयवर्माणं प्ररूढसर्वाङ्गीणव्रणमकरोत् ।

**मदनकः**—( सकौतुकं )[1]

क्व नाम प्राणसंहारी सर्वाङ्गीणव्रणोदयः ? ।
क्व च मैत्रेयसंपर्कः पर्ववल्लीप्ररोहभूः ? ॥ ३ ॥

**मङ्गलकः**—किमिदः कौतूहलम् ?,

अभिमुखवर्तिनि वेधसि पुण्यगुणावर्जितानि सर्वाणि ।
द्वीपान्तरस्थितान्यपि पुरः प्रधावन्ति वस्तूनि ॥ ४ ॥

---

१ क-' किमिदं ' इति ।

[1] तत्कथय क्व प्रस्थितोऽसि ? ।

मदनकः—देवेन भगवतो लोहितपाणेः पुरुषोपहारं कर्तुकामेन वैदेशिकस्य कस्यापि गवेषणाय प्रेषितोऽस्मि ।

मङ्गलकः—इदानीं किं करोति देवः ? ।

[2] मदनकः—एष यक्षोपवने मैत्रेयेण सह किमपि जल्पन्नस्ति तत्र व्रज त्वम् । अहमपि यथादिष्टमादधामि ।

( इति निष्क्रान्तौ । )

॥ विष्कम्भकः ॥

---

( ततः प्रविशति यथानिर्दिष्टः समैत्रेयो विजयवर्मा सुनन्दप्रभृतिकश्च परिवारः । )

विजयवर्मा—कोऽत्र भोः ! ।

( प्रविश्य )

माधव्यः—एषोऽस्मि ।

विजयवर्मा—माधव्य ! नव्यां कामप्यद्य भगवतो यक्षाधिराजस्य पूजां विरचय । स्वयं च वयमद्य बलिं विधास्याम इत्युपहारपशुः पवित्रयित्वा प्रगुणीकार्यः ।

यदादिशति रत्नाकराधिपतिः । ( इत्यभिधाय माधव्यो निष्क्रान्तः । )

विजयवर्मा—( सविनयं मैत्रेयं प्रति )

प्राणेभ्यो नापरं वस्तु प्रेमपात्रं वपुष्मताम् ।

---

१ ख–' यक्षायतने ' इति पाठः । २–ख ' तत्रो ' इति पाठः ।

ते च मे युष्मदायत्ताः किं ब्रुवेऽहमतः परम् ? ॥ ५ ॥

मैत्रेयः—किमेवमादिशन्ति मण्डलेश्वरपादाः ?,

धात्रीधरैकधुरबाहुषु किं नृपेषु
पुष्णाति भद्रमुदरम्भरिरध्वनीनः ? ।
युष्मादृशान् घटयितुं विधिरुन्मदिष्णुः
श्रेयांसि तत्र पुनरौपयिकं स्थितोऽहम् ॥ ६ ॥

सुनन्दः—( साश्चर्यं ) देव ! सेयं महत्त्वस्य गाम्भीर्यस्य च परा काचिदुपनिषत् ।

विजयवर्मा—माहात्म्यदर्पसर्पमसंस्पृशन्तो यत्किञ्चिदपि समादिशत यूयम् । अहं पुनस्तत्रभवतो भवतो विना प्राणितमात्मनो विधेरप्यविधेयमाकलयामि ।

मैत्रेयः—रत्नाकराधीश्वर !

संपत्तिर्वा विपत्तिर्वा रोहन्ती दैवमीक्षते ।
एवमप्यर्थितान्येषु पुंसां क्लैब्याय केवलम् ॥ ७ ॥

सुनन्दः—देव ! विरमतु कथेयम् । अनया खलु द्विजराजराजपादाः महतीं त्रपामुद्वहन्ति ।

विजयवर्मा—

निष्काङ्क्षमुपकारोऽपि विश्वोत्तीर्णा सतां क्रिया ।
अप्रकाशस्तु यस्तस्य तत्र ब्रह्मापि मन्थरः ॥ ८ ॥

सुनन्दः—देव !

पश्चपाः सन्ति ते केचिदुपकर्तुं स्फुरन्ति ये ।
ये स्मरन्त्युपकारस्य तैस्तु वन्ध्या वसुन्धरा ॥ ९ ॥

विजयवर्मा—किमेवमार्यानप्युपकार्याननार्यैः सक्लेशितः संतर्जयसि ? ।

प्रत्युपकारमाधातुमनुरूपं निरौजसः ।
उपकारं स्मरन्तोऽपि विस्मरन्ति महौजसः ॥ १० ॥

( पुनर्मैत्रेयं प्रति सविनयं )

एते ते मदवारिशीकरभरस्यूताम्बराः सिन्धुरा-
स्तेऽप्येते प्रलयप्रभञ्जनजवप्रत्यर्थिनो वाजिनः ।
श्रीरेषा शरदिन्दुदर्पजयिनी सोऽहं कृतज्ञस्ततो
येनार्थस्तममीषु यूयमचिराद्गृह्णीत किं शङ्कया? ॥११॥

मैत्रेयः—द्विजातिरहमनर्हो गजवाजिप्रभृतीनां संपत्तीनाम्, तदिदानीमिदमेवाभ्यर्थये ।

विजयवर्मा—( ससंभ्रमं ) किं तत् ? ।

मैत्रेयः—परममित्रं मित्राणन्दनामानं वणिजं सिंहलाभ्यन्तरे क्वचिदपि गवेषयित्वा मम संघटयत ।

विजयवर्मा—एतावतोऽप्यर्थस्य का नाम प्रार्थना ? । कोऽत्र भोः ! ।

( प्रविश्य )

पुरुषः—एषोऽस्मि ।

विजयवर्मा—अरे तरल ! समादिश मन्त्रिणं यथा [illegible] नामानं वणिजं क्वचिदपि सिंहलाभ्यन्तरे गवेषयित्वा [illegible] ।

( पुरुषो निष्क्रान्तः । )

**विजयवर्मा**—( विमृश्य ) कोऽत्र भोः ! ।

( प्रविश्य )

**कञ्चुकी**—( क ) एसो म्हि ।

**विजयवर्मा**—कञ्चुकिन् ! वत्सां सुमित्रां कन्यकान्तःपुरादाकारय ।

( कञ्चुकी निष्क्रान्तः । )

( प्रविश्य सुमित्रा सविनयं प्रणमति । )

**विजयवर्मा**—आर्य मैत्रेय ! इयमस्माभिर्विजययात्रा-[1]गतैः प्रतिपन्थिनगराद्बन्दीकृत्य समातृभ्रातृका वणिक्पुत्री समानीता । लज्जाविनयादिभिश्च कुलपुत्रिकोचितैर्गुणैरावर्जितैर्दृष्टा च स्वपुत्रीनिर्विशेषेण गौरवविशेषेण । तदनुगृह्णीत माम् । असंजातपाणिग्रहणामेतां परिणयत यूयम् ।

**मैत्रेयः**—महामण्डलेश्वर ! द्विजातिरहमनया सह विजातिः । मित्राणन्दः पुनः सजातिः । यदि संघटिष्यते तदा परिणेष्यते ।

**विजयवर्मा**—यदभिरुचितं भवतां तदस्तु । ( पुनरञ्जलिं बद्ध्वा )

आक्रुष्टाः स्थ यदुच्चकैः कटुवचोवीचीभिरत्युद्भटं[2]
बद्ध्वा यत्प्रहताः स्थ यष्टिभिरटचारार्थिभिः पत्तिभिः ।

---

(क) एषोऽस्मि ।

१ ख–' विजययात्रां गतैः ' इति पाठः ।

२ क–' त्यद्भुतं ' इति ।

अस्माभिः प्रतिपक्षरोपपरुषैः क्षिप्ताः स्थ यन्निष्ठुरं
तद्यूयं सहत क्रुधो हि भिदुराः पात्येषु पुण्यात्मनाम् ॥१२॥
( मैत्रेयः सलज्जमधोमुखो भवति । )

विजयवर्मा—( विमृश्य ) सुनन्द ! कोऽयं यक्षाधिराजस्योपहारविधेर्विलम्बः[1] ? ।

( प्रविश्य )

कपिञ्जलः—देव ! सर्वमपि प्रगुणं पूजोपकरणम्, किन्तूपहारपुरुषः कथमपि न संघटितः[2] ।

विजयवर्मा—( सविषादं ) सुनन्द ! असंपादितोपयाचितानामस्माकमुपस्पर्शनमात्रमप्यनुचितम् । तद्विचिन्तय कमप्युपहारसंघटनोपायम् ।

मैत्रेयः—

पुण्यप्रसूतजन्मानश्चण्डालव्यालसङ्गताम् ।
मांसरक्तमयीं देवाः किं बलिं स्पृहयालवः ? ॥ १३ ॥

ततः कोऽयं भवद्भिर्विचारवन्ध्यमनसां दुर्मेधसां पन्थाः समुपास्यते ? । अपि च—

अक्रूरं श्रेयसे कर्म क्रूरमश्रेयसे पुनः ।
इति सिद्धे पथि क्रूरं श्रेयसे स्पृशतां भ्रमः ॥ १४ ॥

विजयवर्मा—क्रूरशास्त्रप्रतारितैरस्माभिर्योऽयमेकः प्रतिपन्नो विधिः स प्रमाणमस्तु । अतः परं पुनर्यदभिधास्यते तदनुष्ठास्यामः ।

---

[1] 'विधिविलम्बः' इति । [2] 'ख–' संघटते ' इति ॥

( प्रविश्य )

प्रतीहारः—देव ! अमात्येन कामरतिना प्रेषितः पुरुषो द्वारि वर्तते ।

विजयवर्मा—( साशङ्कं ) शीघ्रं प्रवेश्यताम् ।

( प्रविश्य पुरुषः प्रणम्य लेखमर्पयति । )

सुनन्दः—( गृहीत्वा वाचयति । ) स्वस्ति रङ्गशालातो महामात्यश्रीकामरतिर्मण्डलेश्वरं विजयवर्माणं संबोध्य कार्यमादिशति । यथा, यदि मदीयं कमप्युपकारलेशं स्मरसि तदा यदयमपदक्षीणं किमपि विज्ञपयति संदेशहरो दुर्मुखस्तदचिरादतिनिगूढमादधीथा इति ।

विजयवर्मा—दुर्मुख ! कथय किमपि कर्णे यदमात्यः समादिष्टवान् ।

( दुर्मुख उत्थाय कर्णे एवमेव । )

विजयवर्मा—कामरतिवचसा वयमात्मीयं शिरोऽपि समर्पयामः । एतावतः पुनरर्थस्य का कथा ? । किञ्च—

एकेनैवाधुनाऽस्माकमेतेन ननु कर्मणा ।
मन्त्री यशश्च संतोषपरिपोषं प्रयास्यति ॥ १५ ॥

( पुनः कपिञ्जलं प्रति ) यदयं दुर्मुखः समर्पयति तत्सुगृहीतं कुरु । ( पुनः कर्णे एवमेव । )

( सदुर्मुखः कपिञ्जलो निष्क्रान्तः । )

( नेपथ्ये )

भो भोः ! उपवनचारिणः ! संप्रमे निःश्रेयेऽप्युपहारोप-

करणे किमद्यापि विलम्बते रत्नाकराधिनाथः ? ।

विजयवर्मा—( आकर्ण्य मैत्रेयं प्रति ) यूयमागच्छत यक्षायतनम् । समीपीभूय कारयतोपहारकर्म ।

( सर्वे यक्षायतनमुपसर्पन्ति । )

विजयवर्मा—( मैत्रेयं प्रति ) सोऽयमस्माकं कुलदेवता लोहितपाणिर्यक्षाधिनाथः । ( पुनः सखेदं ) कथं बहलधूपधूमध्यामलितलोचनैरस्माभिर्यक्षाधिराजस्यापि मुखाम्भोजं न विलोक्यते ? ।

( प्रविश्य )

कपिञ्जलः—देव ! सोऽयं नियमितभुजः कृताशेषवध्यमण्डनः पुरो लोहितपाणेरुपहारपुरुषः ।

( ततः प्रविशति यथानिर्दिष्टः पुरुषः । )

विजयवर्मा—( मैत्रेयं प्रति ) भगवन् ! कुरुतास्योपहारपुरुषस्य प्रोक्षणादिकां क्रियाम् । प्रयच्छत पारलौकिकमप्युपदेशम् ।

( मैत्रेयः प्रोक्षणादिकं कृत्वा धूपपात्रं दर्शयति । )

विजयवर्मा—कोऽत्र भोः ! कृपाणधारेषु ? ।

( प्रविश्य पुरुषः कृपाणमर्पयति । )

विजयवर्मा—( कृपाणमाकृष्य ) रे ! स्मर किमपि दैवतम् । अस्तमयति परमतस्ते जीवितकथा ।

मैत्रेयः—भो उपहारपुरुष !

---

१–२–क–' प्रेक्षणादिकां ' ।

दैवादुपस्थिते मृत्यौ क्षीणसर्वप्रतिक्रिये ।
तथा कथञ्चिन्मर्तव्यं न मर्तव्यं यथा पुनः ॥ १६ ॥

अहं च सर्वदर्शनानां क्रियासु कुशलो विशेषतश्चार्हतीषु । तत्कथय किं ते कुलम् ?, किं ते कुलक्रमागतं दैवतम् ?, येन तदुचितां पारलौकिकीं क्रियां कारयामि । अपि च—

बन्धुभिर्विप्रयुक्तोऽहमिति चेतसि मा कृथाः ।
बन्धूनां संप्रयोगेऽपि त्वमेव सहसे व्यथाः ॥ १७ ॥

पुरुषः—( मन्दस्वरं ) आर्य ! गाढबन्धनपीडया शुष्कतालुमूलः स्तोकमपि वक्तुमहं न प्रभविष्णुः । ततः शिथिलय मे मनाग् बन्धनानि । पायय शिशिरस्य वारिणश्चुलुकमेकम् ।

विजयवर्मा—कोऽत्र भोः ! ।

( प्रविश्य )

पुरुषः—एषोऽस्मि ।

विजयवर्मा—अरे मदनक ! शिथिलय बन्धनानि । पायय शिशिरमम्भः ।

( मदनकस्तथाकरोति । )

पुरुषः—आर्य ! कौतुकमङ्गलनगरजन्मा वैदेशिकोऽहम् ।

मैत्रेयः—( स्वगतं ) कौतुकमङ्गलनगरजन्मेत्यस्ति नः पक्षपातः । भवतु तावत् । ( प्रकाशं ) कौतुकमङ्गलनगरे कस्ते पिता ?, किं ते मित्रम् ? ।

पुरुषः—( निःश्वस्य ) आर्य ! कृतमिदानीमेतस्मिंस्त्रिलोकीत्रपामरोद्रेकहेतौ पशुसमुचिते मरणपर्वणि कुलाचारप-

वित्राणां पितृमित्राणां प्रकाशनेन। न मे पितरौ, न मे मित्राणि, किमुताहमेकाकी गगनगर्भादिव पतितः।

मैत्रेयः—(स्वगतं) महाकुलप्रसूतः खल्वयम्, महासत्त्वप्रकृतिश्च कोऽपि। (पुनर्विमृश्य) अपि नामायं कोऽपि जिनदासवर्गीणः संभवेत् ततो निर्बन्धेन पृच्छामि। (प्रकाशं) महापुरुष! यत एव ते पवित्राणि पितृमित्राणि तत एवाकाण्डोपस्थिते मरणविड्डरे समुद्धोपणीयानि।

पुरुषः—आर्य! जिनदासो मे पिता। मित्रं मकरन्दो मैत्रेयश्च।

मैत्रेयः—हा भ्रातः मित्रवत्सल मित्राणन्द! कामिमां दुस्थामवस्थामधिगतोऽसि? (इत्यभिदधानः पुरुषं परिरभ्य तारस्वरं प्रलपति।)

सर्वे—(ससंभ्रमं) आर्यार्य मैत्रेय! किमिदम्?।

मैत्रेयः—मण्डलाधिनाथ! स एष मित्रं मे मित्राणन्दो यदर्थं यूयमभ्यर्थिताः।

विजयवर्मा—(ससंभ्रमं कृपाणेन स्वयं बन्धनानि त्रोटयति। पुन सविनयं) महापुरुष! क्षमस्व यदस्माभिरज्ञातसंबन्धैरपराद्धम्।

पुरुषः—ममैव कर्माण्यत्रापराध्यन्ति न यूयम्।

विजयवर्मा—

अपराधोऽत्र नास्माकं न च प्राचीनकर्मणाम्।
किन्तु कामरतेस्तस्य पापतन्त्रस्य मन्त्रिणः॥ १८॥

( पुनः सविनयं ) युष्मदर्थमियं विधृता मैत्रेयेण वत्सा
मित्रा, तदेतामस्मिन्पवित्रे पर्वणि परिणयत यूयम् ।

मित्राणन्दः—अस्ति मे पुरापि कौमुदी नाम पत्नी ।
देतां मदीयो भ्राता मकरन्दः परिणेष्यते ।

( नेपथ्ये सकोलाहलं )

नान्यः ! सप्तकृत्वः स्थगयत निखिलान् हास्तिकैर्गोपुराग्रान्
अभीयानश्ववाराः ! प्रगुणयत बहिःसौप्तिकोपप्लवाय ।
दान्तान्याद्रणुध्वं वपुरतिविकटैः कङ्कटैर्युद्धकेलि-
श्रद्धागर्धिष्णुदर्पास्तरलयत भटाः ! संयुगं सांयुगीनाः ॥१९॥

( प्रविश्य संभ्रान्तो )

मङ्गलकः—देव ! विपक्षावस्कन्दः प्राप्तः ।

विजयवर्मा—( ससंभ्रमं ) व्रजत स्वं स्वं स्थानं यूयम् ।
यमिदानीमभ्यमित्रीयतामाधास्यामः ।

( इति निष्क्रान्ताः सर्वे । )

॥ षष्ठोऽङ्कः समाप्तः ।

---

## ॥ अथ सप्तमोऽङ्कः ॥

( ततः प्रविशति सर्पकर्णः । )

सर्पकर्णः—( सखेदं )

---

१ क.–' गोपुरान्तात् ' इति ।

छित्त्वा कण्ठमकुण्ठखड्गलतया चाटूनि संतन्वतो
लोकात्क्लेशशतार्जितं च सुलसद्राद्धर्यान्धलैर्गृह्यते ।
प्राणानां च पणेन तस्य निभृतं भोगः सदा सर्वतः
साशङ्कैः स्वपरोपतापजननीं धिक् तस्कराणां स्थितिम् ॥१

। ( पुनर्विमृश्य ) आदिष्टोऽस्मि पल्लीपतिना सार्थस्य वा प न्थस्य वा कस्यापि गवेषणाय तदहमेतं न्यग्रोधमारुह्य लोकयामि । ( तथा कृत्वा विलोक्य च ) कथमयं दवीय प्रदेशे महान् सार्थः समेति ? । ( पुनरन्यतोऽवलोक्य सहर्ष कथमेतानि कियन्त्यपि स्त्रीप्रायाणि मानुषाणि पल्लेः परिस वर्तीन्येव ? । तदुत्तीर्य निपुणमवलोकयामि ।(इत्युत्तरणं नाटयति

( ततः प्रविशति कौमुदी सुमित्रा स्कन्धकृतबालका वृद्धा मूर्धकृतकरण्डकः स्थविरश्च । )

कौमुदी—( क ) अणंतरं किंचिआइं पि दिवसाइं म्हे अमच्चस्स गेहे वसिआइं ।

सुमित्रा—( ख ) तदो तदो ? ।

कौमुदी—( ग ) अन्नया निसीढसमये केणावि प

---

( क ) अनन्तरं कियन्त्यपि दिवसानि वयं अमात्यस्य उषिताः ।

( ख ) ततस्ततः ? ।

( ग ) अन्यदा निशीथसमये केनापि प्रयोजनेन कुत्रापि स्येन मित्राणन्दः प्रेषितः ।

१ ख–' न्यग्रोधमधिरुह्य ' इति ।

णेण कत्थवि अमच्चेण मित्ताणंदो पेसिदो ।

वृद्धा—( सत्वरं ) ( क ) तदो तदो ? ।

कौमुदी—( ख ) मह उवरिं अणुरायं जाणिय अमच्चस्स भारिआए एदं थविरं सहायं दाऊण करंडयं च समप्पिअ ाए अहं पि नीहारिदा ।

स्थविरः—वत्से ! सपत्नीसम्भावनया त्वममात्यपत्न्या ष्कासितासि ।

कौमुदी—( ग ) कमेण च मग्गे भमंती ईआणिं तुम्हाणं त्थे मिलिदा ।

वृद्धा—( घ ) वत्से ! दिट्ठिया चिट्ठदि दे पई मित्ताणं-रयणायरउरे । एसा वि मह पुत्ती सुमित्ता तुह पइणो मित्तस्स रंदस्स रयणायराहिवइणा परिणेदुं पडिवादिदा वट्टदि ।

स्थविरः—( सभयं )

एषा व्याघ्रमुखीपल्लिरावासो वज्रवर्मणः ।

---

( क ) ततस्ततः ? ।

( ख ) ममोपरि अनुरागं ज्ञात्वा अमात्यस्य भार्यया एतं वेरं सहायं दत्त्वा करण्डकं च समर्प्य ममातेऽहं निष्कासिता ।

( ग ) क्रमेण च मार्गे भ्राम्यन्ती इदानीं युष्माकं सार्थे मीलिता ।

( घ ) वत्से ! दिष्ट्या तिष्ठति ते पतिर्मित्राणन्दो रत्नाकरपुरे । ाऽपि मम पुत्री सुमित्रा तव पत्युर्मित्रस्य मकरन्दस्य ाकराधिपतिना परिणेतुं प्रतिपादिता वर्तते ।

१ ख–' इयाणिं ' इति । २ ख–' मेत्तस्स ' इति ।

चौरेभ्यो भयमेतस्यां राज्ञोऽपि किमु मादृशाम् ?॥
ततः सर्वाभिरपि सर्वतो दत्तदृष्टिभिः
र्वाचंयमाभिश्च त्वरिततरं गन्तव्यम् ।

( सर्वाः सभयं परिक्रामन्ति )

बालकः—( क ) अम्ब ! बुभुक्खिदो म्हि ।

( वृद्धा हस्तसंज्ञया वारयति । )

बालकः—( तारस्वरं प्रलपन् ) अंब ! अपूपं देहि मे

स्थविरः—( सरोषं यष्टिमुद्यम्य ) अरे ! तिष्ठ, मा रो
अन्यथा कर्णावुत्पाटयिष्यामि ।

( बालकः सभयमास्ते । )

सर्पकर्णः—यथाऽयं भारभुग्नकन्धरः शनैः प्रच
स्थविरस्तथा जाने सद्रविणोऽयं सार्थः । भवतु । स्थ
पृच्छामि । ( उच्चैःस्वरं ) आर्य ! क्व प्रस्थितोऽसि ? ।

स्थविरः—( स्वगतं ) यथाऽयं तरलदृष्टिस्तथा जाने च
रमणिधिः । ( प्रकाशं साक्षेपं ) किं तेऽस्मद्गमनचिन्तया ?
व्रज यत्र चलितोऽसि ।

सर्पकर्णः—नूनमयं मां ज्ञातवान् । भवतु । पल्लीपत
गत्वा विज्ञपयामि । ( इति विचिन्त्य शनैः शनैर्निष्क्रान्तः । )

स्थविरः—यदि मां तस्करा बध्नन्ति वा व्यापादयन्ति
तदा बालकं गृहीत्वा सर्वाभिरपि पलायितव्यम् ।

( क ) अम्ब ! बुभुक्षितोऽस्मि ।

( नेपथ्ये )

( क ) धलेध ले ! धलेध, मालेध ले ! मालेध, वेढेध ! वेढेध ।

स्थविरः—हा ! हताः स्मः ! कथं तस्कराः समापतन्ति? ।

( वृद्धा अधःपरिधानाञ्चलेन बालकं पिदधाति )

( कौमुदीसुमित्रे नेपथ्यानि पटावरणेन गोपयतः । )

( ततः प्रविशति पल्लीपतिर्यमदण्डपिङ्गलकसर्पकर्णादिकश्च परिवारः ।)

पल्लीपतिः—( सनिर्वेदं )

नक्तं दिनं न शयनं प्रकटा न चर्या
स्वैरं न चान्नजलवस्त्रकलत्रभोगः ।
शङ्कानुजादपि सुतादपि दारतोऽपि
लोकस्तथापि कुरुते ननु चौर्यवृत्तिम् ॥ ३ ॥

यमदण्डः—देव !

ऐहिकामुष्मिकान् क्लेशान्क्लिसौहित्यकाम्यया ।
स्वीकुर्वन्नस्ति दुर्मेधाः कोऽन्यस्तस्करतो जनः ? ॥ ४ ॥

( पल्लीपतिः भ्रूसंज्ञया यमदण्डं प्रेरयति । )

यमदण्डः—( कृपाणमुद्यम्य साक्षेपं ) अरे वृद्ध ! मुञ्च ण्डकम् ।

स्थविरः—( सदैन्यं ) गृहाण करण्डकम् । देहि मे प्राण-

( क ) धरत रे ! धरत, मारयत रे ! मारयत, वेष्टयत रे ! यत ।

१ ख–' कृपाणमुद्दिश्य ' इति ।

भिक्षाम् । येनाऽहं जीवन्नात्मनः कुटुम्बकं पश्यामि ।

( यमदण्डः करण्डकं प्रतिगृह्णाति । )

( सर्वाः प्रतिभयेन वेपन्ते । )

( पिङ्गलकः कौमुदीसुमित्रयोराभरणानि गृह्णाति । )

पल्लीपतिः—सर्वेषामपि वस्त्राणि रक्षणीयानि ।

यमदण्डः—वृद्धे ! परिधानाञ्चलेन पिहितं किमिदम् ?।

वृद्धा—( क ) न किं पि ।

( बालकः प्रतिभयेन मन्दं मन्दं रोदिति । )

पल्लीपतिः—कथमयं बालकस्वरः ? । ( यमदण्डं प्रति ) निरूपय बालको वा बालिका वा ? ।

सर्पकर्णः—देव ! बालकोऽयम् ।

पल्लीपतिः—वृद्धे ! कस्याऽयं तनयः ? ।

वृद्धा—( सदैन्यं ) ( ख ) एस मह पुत्तओ । एदाओ दुवे वि मह पुत्तीओ ।

पल्लीपतिः—कथं पादचारया त्वयाऽयमियति वर्त्मनि समानीतः ? ।

वृद्धा—( ग ) कंधेण आणीदो ।

पल्लीपतिः—( यमदण्डं प्रति )

निसर्गसौहृदाज्ञातकायवाङ्मनसक्रमाः ।

---

( क ) न किमपि ।

( ख ) एष मम पुत्रकः । एते द्वे अपि मम पुत्र्यौ ।

( ग ) स्कन्धेन आनीतः ।

बालाः कथं नु जीवेयुर्न भवेज्जननी यदि ॥ ५ ॥

( यमदण्डः बालकं हस्ते गृहीत्वाकर्षति । ) ।

वृद्धा—( क ) पुत्त ! पुत्त ! मिल्हेहि[1] एदं वरायं ।

सुमित्रा—( प्रणम्य पल्लीपतिं प्रति ) (ख) ताद ! अम्हाणं सभंगेण दूरीभूदसयलकुडुंबगाणं[2] एसो चेअ एगो जीविदावणं । ता चिट्ठदु एस वराओ ।

पल्लीपतिः—तिष्ठतु, न वयं ग्रहीष्यामः । किन्तु किप्येतदीयं द्रविणं मयच्छ ।

स्थविरः—पल्लीश्वर ! रत्नाकरभङ्गेन कान्दिशिका युष्माच्छरणमेताः मपन्नाः । साम्प्रतमेतासां शम्बलमपि नास्ति । ततः किमेतं बालकं गृहीत्वा करिष्यत । गृहीतोऽयं[3] मातरं विना विपत्स्यते ।

यमदण्डः—वयमपि द्रविणं विना विपद्यामहे । ततोऽस्मनीयामपि चिन्तां कामपि कुरु ।

पल्लीपतिः—यत्रेयं नवयौवनाञ्चितवपुर्मृगाक्षी सार्थे भवति त्र शम्बलकस्याप्यसम्भव इति न मे मनः प्रत्येति ।

कौमुदी—( ग ) संवलयं सव्वं पि तुम्हेहि गहिदं ।

---

( क ) पुत्र ! पुत्र ! मुञ्च एतं वराकम् ।

( ख ) तात ! अस्माकं देशभङ्गेन दूरीभूतसकलकुटुम्बकानां एष एव एको जीवितालम्बनम् । तत् तिष्ठत्वेष वराकः ।

( ग ) शम्बलकं सर्वमपि युष्माभिर्गृहीतम् । अतः परं सर्वथा किमपि नास्ति ।

१ ख—'मेल्लिहि' । २ ख—'कुडुंबगाणं' । ३ ख—'गृहीतोऽप्ययं' ।

अओ वरं सव्वहा किं पि नत्थि ।

पल्लीपतिः—अयं ते पिङ्गलः शम्बलं दास्यति । ( पु साक्षेपं यमदण्डं प्रति ) गृहाणैतं बालकम् । अतिकालो भवति अजामः पल्लिकायाम् ।

( यमदण्डः प्रसभं रुदन्तं बालकमाकर्षति । )

( बालकः प्रतिभयेन वृद्धायाः कण्ठमवलम्बते । )

( सर्वास्तारस्वरं रुदन्ति । )

पिङ्गलकः—( वृद्धां यष्टिना प्रणिहत्य ) मुञ्च बालकम् अन्यथा त्वां मारयिष्यामि ।

वृद्धा—( क ) मारेहि मं, तहावि न मिल्लिस्सं ।

पल्लीपतिः—( स्वगतं )

अस्मिन् जगति महत्यपि न वेधसा किमपि वस्तु तद्घटितम्
अनिमित्तचित्तवृत्तेर्भवति यतो मातुरुपकारः ॥ ६ ॥

( प्रकाशं सकपटं ) यमदण्ड ! यदि न मुञ्चति तदा व्याप दय बालकम् ।

( यमदण्डः कृतकं कृपाणेन प्रणिहन्ति । )

( वृद्धा पूत्कुर्वाणा कृपाणघातं शिरसा प्रतीच्छति । )

स्थविरः—( तारस्वरं ) अब्रह्मण्यमब्रह्मण्यम् ।

सुमित्रा—( यमदण्डं प्रति ) ( ख ) भाय ! कीस थेरिं मारेसि ? ।

---

( क ) मारय माम्, तथापि न मोक्ष्यामि ।

( ख ) भ्रातः ! कस्मादेतां स्थविरां मारयसि ? ।

पल्लीपतिः—( सविस्मयं )

अपत्यजीवितस्यार्थे प्राणानपि जहाति या ।
त्यजन्ति तामपि क्रूरा मातरं दारहेतवे ॥ ७ ॥

( पुनः सकरुणं यमदण्डं प्रति ) मुञ्चैतं वराकम् । अन्यतः तोऽपि द्रविणमपहरिष्यामः ।

( प्रविश्य )

पुरुषः—(क) भट्टा ! दिट्ठिया एगो महंतो सत्थो संपत्तो ।

पल्लीपतिः—( सहर्षं ) अस्ति किमपि द्रविणम् ? ।

पुरुषः—( ख ) कणयसंपुडाइयं पहूदं दविणमत्थि ।

पल्लीपतिः—सार्थवाहोऽपि संगृहीतः ? ।

पुरुषः—( ग ) न केवलं संगिहीदो तुम्हाणं पासे णीदो अत्थि ।

( ततः प्रविशति पदातिना विधृतबाहुः सार्थवाहः । )

पल्लीपतिः—( विलोक्य ) यथाऽयं दर्शनीयाकृतिस्तथा ने महापुरुषः कोऽपि ।

सुमित्रा—(अपवार्य कौमुदीं प्रति) ( घ ) सहि ! सत्थवाहं रूविअ मे महंतो हरिसपब्भारो वट्टदि ता चिंतेहिं किं

( क ) भर्त्तः ! दिष्ट्या एको महान् सार्थः संप्राप्तः ।

( ख ) कनकसंपुटादिकं प्रभूतं द्रविणमस्ति ।

( ग ) न केवलं संगृहीतो युष्माकं पार्श्वे आनीतोऽस्ति ।

( घ ) सखि ! सार्थवाहं निरूप्य मे महान् हर्षप्राग्भारो वर्त्तते चिन्तय किं कारणम् ? ।

अओ वरं सव्वहा किं पि नत्थि ।

पल्लीपतिः—अयं ते पिङ्गलः शम्बलं दास्यति । ( पु
साक्षेपं यमदण्डं प्रति ) गृहाणैतं बालकम् । अतिकालो भवति
व्रजामः पल्लिकायाम् ।

( यमदण्डः प्रसभं रुदन्तं बालकमाकर्षति । )

( बालकः प्रतिभयेन वृद्धायाः कण्ठमवलम्बते । )

( सर्वास्तारस्वरं रुदन्ति । )

पिङ्गलकः—( वृद्धां यष्टिना प्रणिहत्य ) मुञ्च बालकम्
अन्यथा त्वां मारयिष्यामि ।

वृद्धा—( क ) मारेहि मं, तहावि न मिल्लिस्सं ।

पल्लीपतिः—( स्वगतं )

अस्मिन् जगति महत्यपि न वेधसा किमपि वस्तु तद्घटितम्
अनिमित्तचित्तवृत्तेर्भवति यतो मातुरुपकारः ॥ ६ ॥

( प्रकाशं सकपटं ) यमदण्ड ! यदि न मुञ्चति तदा व्याप
दय बालकम् ।

( यमदण्डः कृतकं कृपाणेन प्रणिहन्ति । )

( वृद्धा पूत्कुर्वाणा कृपाणघातं शिरसा प्रतीच्छति । )

स्थविरः—( तारस्वरं ) अब्रह्मण्यमब्रह्मण्यम् ।

सुमित्रा—( यमदण्डं प्रति ) ( ख ) भाय ! कीस प
येरिं मारेसि ? ।

---

( क ) मारय माम्, तथापि न मोक्ष्यामि ।

( ख ) भ्रातः ! कस्मादेतां स्थविरां मारयसि ? ।

वक्त्रं चन्द्रविलासि पङ्कजपरीहासक्षमे लोचने
वर्णः स्वर्णमलङ्करिष्णुरलिनीं जिष्णुः कचानां चयः ।
वक्षोजाविभकुम्भविभ्रमहरौ गुर्वी नितम्बस्थली
वाचां मार्दवमुज्ज्वलं युवतिषु स्वाभाविकं मण्डनम् ॥९॥

पल्लीपतिः—सार्थवाह ! किमभिधानोऽसि ? ।

सार्थवाहः—मकरन्दाभिधानोऽस्मि ।

सुमित्रा—( सवितर्कमात्मगतं ) ( क ) किं एसो सो
ररंदो ?, जस्स अहं रयणायराहिवइणा परिणेदुं पडिवादिदा ।
पुनः सस्पृहं ) जइ एसो चिअ सो ता कदत्थो मे जम्मो ।

कौमुदी—( सविमर्शमात्मगतं ) ( ख ) किं एसो सो
ह भत्तुणो मित्तं मयरंदो ? । दिट्ठिआ दिट्ठिआ जीविद म्हि
त्तुणो मित्तस्स दंसणेण ।

सार्थवाहः—( सुमित्रां निरूप्य स्वगतं )

अस्यां जगन्नयनकैरवचन्द्रिकायां
सत्यामपि त्रिभुवनस्थितिसूत्रधारः ।
लक्ष्म्यां स यादसि रतिं हरिरादधानः
प्रेम्णा विचारविमुखां दिशति प्रशस्तिम् ॥ १० ॥

---

( क ) किं एष स मकरन्दः ?, यस्याहं रत्नाकराधिपतिना ।
णेतुं प्रतिपादिता । यदि एष एव स तत्कृतार्थं मे जन्म ।

( ख ) किं एष स मम भर्तुर्मित्रं मकरन्दः । दिष्ट्या दिष्ट्या
विताऽस्मि भर्तुर्मित्रस्य दर्शनेन ।

१ ख–' मेत्तं '

पल्लीपतिः—अरे सर्पकर्ण ! गत्वा ब्रूहि कङ्कालकम् । यथा नरदत्तः सुखं धरणीयः । अपरथा लक्ष्मीपतिर्युवराजः क्रोत्स्यति ।

( सर्पकर्णो निष्क्रान्तः । )

( प्रविश्य )

पुरुषः—( क ) भट्टा ! लच्छीवइणा पेसिदो पुरिसो तुम्हाणं दंसणमिच्छंदि ।

पल्लीपतिः—( साशङ्कं ) शीघ्रमानय ।

( पुरुषो निष्क्रान्तः । )

( प्रविश्य लेखहारकः लेखमर्पयति । )

पल्लीपतिः—( उत्थाय गृहीत्वा वाचयति ) स्वस्ति, वेलन्धरनगराद्युवराजो लक्ष्मीपतिर्व्याघ्रमुख्यां वज्रवर्माणं संबोध्य कार्यमादिशति । यथा, अस्माकं परमोपकारी मित्राणन्दनामा वणिक् कौमुदीनाम्न्या कान्तया समं परिभ्राम्यन् क्वचिदपि यदि भवत्पदातिभिः प्राप्यते तदाऽस्मभ्यमुपनेय इति ( पुनर्विमृश्य स्वगतं ) सम्भवति तयोर्मध्यात्किमप्येषु मानुषेषु । ( प्रकाशं सुमित्रां प्रति ) भद्रे ! किमभिधानासि ? ।

सुमित्रा—( ख ) अहं सुमित्ताभिहाणा ।

पल्लीपतिः—( कौमुदीं प्रति ) तव .

( क ) भर्तः ! लक्ष्मीपतिना प्रेषित. दर्शनमिच्छति । ( ख ) अहं सुमित्राभिधान.

१ ख-' मिच्छति ' इति ।

**स्थविरः**—राजपुत्र ! अस्याः कौमुदीत्यभिधानम् .

**पल्लीपतिः**—( स्वगतं ) संवदति भार्यानामधेयम् । ( प्रकाशं ) किमभिधानः पतिरस्याः ? ।

**स्थविरः**—एतद्भर्त्ता मित्राणन्दाभिधानः ।

**पल्लीपतिः**—( स्वगतं ) कथमस्माभिरात्मीयानामेव मानुषाणामुपद्रवः कृतः ? ।

**सार्थवाहः**—भद्रे ! कुतस्त्यस्ते भर्त्ता ? ।

**कौमुदी**—( क ) कोउगमंगलनिवासी मे भत्ता ।

**सार्थवाहः**—मैत्रेयो जीवति ? ।

**कौमुदी**—( स्वगतं ) (ख) जहा एस सव्वं पि जाणदि तहा नूणमेस मयरंदो । ( प्रकाशं ) जीवदि ।

**सार्थवाहः**—राजपुत्र ! इयं मे भ्रातृजाया । स खलु मित्राणन्दो मे परमं मित्रम् ।

**कौमुदी**—( पल्लीपतिं प्रति ) ( ग ) एसा मे बहिणिआ सुमित्ता मित्ताणंदतोसिदेण रणायराहिवयणा एदस्स अदिट्ठस्स वि परिणेदुं पडिवादिदा वट्टदि ।

---

( क ) कौतुकमङ्गलनिवासी मे भर्त्ता ।

( ख ) यथा एष सर्वमपि जानाति तथा नूनमेष मकरन्दः । जीवति ।

( ग ) एषा मे भगिनी सुमित्रा मित्राणन्दतोषितेन रत्नाकराधिपतिना एतस्यादृष्टस्यापि परिणेतुं प्रतिपादिता वर्तते ।

१ क–' कोतुअ ' इति ।

प्रेक्षितव्यम् ? ।

पल्लीपतिः—अयमस्माकं तर्हि जामाता । विवाहमङ्गलमप्यस्याः त्वद्दुहितुरस्माभिराधेयम् । ( पुनर्लेखवाहकं प्रति ) भद्र ! व्रज त्वम् । विज्ञपय युवराजाय । यथा प्राभृतानि कियन्त्यपि मानुषाणि । तानि प्रेषयिष्यामः । वयमपि विवाहमङ्गलमाधातुं पल्लीमधितिष्ठामः ।

( इति निष्क्रान्ताः सर्वे । )

॥ सप्तमोऽङ्कः समाप्तः ॥

---

॥ अथ अष्टमोऽङ्कः ॥

---

( ततः प्रविशति मकरन्दः कौमुदी सुमित्रा च । )

मकरन्दः—( विमृश्य ) कोऽत्र भोः ! ।

( प्रविश्य )

पुरुषः—( क ) एसो चिट्ठामि । आदिसेदु सत्थवाहे ।

मकरन्दः—अरे मागध ! इदानीं परिणतवया वर्तते दिवसस्ततो ब्रूहि गत्वा नरदत्तम् । यथा, यावद्वयमेकचक्राया नगर्याश्चैत्यप्रासादप्राकारारामरामणीयकं कौमुदीसुमित्रयोरादर्शयामस्तावत्त्वया सार्थरक्षायां प्रयत्नो विधेयः । स्थविरश्च शम्बलं किमपि दत्त्वा रङ्गशालां प्रति प्रतिनिवर्तनीयः ।

( मागधो निष्क्रान्तः । )

---

(क) एष तिष्ठामि । आदिशतु सार्थवाहः ।

१ ख—' ! २ ख—' सत्थवाहे ' ।

मकरन्दः—( विमृश्य ) आर्ये कौमुदि ! कुलक्रमेणैवायं वज्रवर्मा शबरः । पवित्रेण चरित्रेण पुनः साधूनप्यतिशेते । इयन्तं हि द्रविणसमूहमुपनतं परित्यक्तुं साधवोऽपि तपस्विनः । किमुत परजीवितापहारिणः पक्कणचारिणः ? ।

द्रविणं मुञ्चमानश्च हस्तमोचनपर्वणि ।
औचितीं निष्णबुद्धित्वमात्मनः प्रथयत्ययम् ॥ १ ॥

( विमृश्य ) प्रिये सुमित्रे ! मातरं भ्रातरं च ते स्वनगरं प्रति प्रस्थापयन् वज्रवर्मा परं पुण्यमर्जितवान् ।

कौमुदी—( क ) सहि सुमित्ते ! कत्थ ते पिउहरं ? ।

सुमित्रा—( ख ) अलयउरनिवासिणो वणदेवस्स सत्थवाहस्स अहं धूआ विजयवम्मणा बंदिग्गाहेण आणीदा ।

मकरन्दः—( पुरोऽवलोक्य साशङ्कं )

चैत्यानि ध्वजचुम्बिताम्बरतलान्यभ्रेभमुच्चैस्तलं
हर्म्याण्यद्भुतवैभवानि विपणिपण्यैरगण्यैर्धना ।
सञ्चारस्तु न चत्वरे न च गृहे स्त्रैणस्य पौंस्नस्य च
शङ्कात्रासवितर्कविस्मयकरः कोऽयं प्रकारः पुरः ? ॥२

कौमुदी—( सभयविस्मयं ) ( ग ) अज्ज मयरंद ! ता किं नयरस्स मज्झं न पेक्खिदव्वं ? ।

---

( क ) सखि सुमित्रे ! कुत्र ते पितृगृहम् ? ।

( ख ) अलकपुरनिवासिनो वनदेवस्य सार्थवाहस्याहं पुत्री विजयवर्मणा बन्दिग्राहेणानीता ।

( ग ) आर्य मकरन्द ! तावत् किं नगरस्य मध्यं न प्रेक्षितव्यम् ? ।

मकरन्दः—मध्यमपि विलोकयिष्यामः ।

( सर्वे परिक्रामन्ति । )

मकरन्दः—( सभयं )

स्फुरद्वामं चक्षुः प्रतिमुहुरिदं सैष भुजगः
स्फटाटोपी शुष्के विटपिनि विमुञ्चन्विपलवान् ।
खरश्चायं भूम्नाऽभिमुखमतिरुष्टः कटु रटन्
पुरस्तात्पश्चाद्वा विपदमतिगुर्वी दिशति नः ॥ ३ ॥

सुमित्रा—( क ) अज्जउत्त ! फलविसंवाईणं कित्तियाणं सउणाणं कन्नं देसि ।

मकरन्दः—प्रिये !

विसंवदतु वा मा वा शकुनं फलकर्मणि ।
तथापि प्रथमं चेतो वैमनस्यमुपाश्नुते ॥ ४ ॥

आभ्यन्तरं च शकुनं चेत एव । तदेरे देवतायतनमेतदधिरुह्य देवतां नमस्कुर्मः । उपनता अपि हि विपदः प्रतिरुध्यन्ते देवतादर्शनेन ।

( सर्वे देवतायतनमधिरोहन्ति । )

मकरन्दः—कथमयं सकलदेवताधिचक्रवर्ती नाभिसूनुरस्याभ्यन्तरमलङ्करोति ? ।

( सर्वे प्रणमन्ति । )

---

( क ) आर्यपुत्र ! फलविसंवादिनां कियतां शकुनानां कर्णं ददासि ? ।

१ क–' एन    नि पाठः ।

मकरन्दः—( अञ्जलिमाधाय )

भद्राम्भोजमृणालिनी त्रिभुवनावद्यच्छिदाजाह्नवी
लक्ष्मीयन्त्रणशृङ्खला गुणकलावल्लीसुधासारणिः ।
संसारार्णवनौर्विपत्तिलतिकानिस्त्रिंशयष्टिश्चिरं
दृष्टिर्नाभिसुतस्य नः प्रथयतु श्रेयांसि तेजांसि च ॥५॥

( पुनर्विचिन्त्य ) आर्ये कौमुदि ! देवतायतनजगत्यां स्थित्वा विलोकयामः कस्यापि मानुषस्य सञ्चारम् । ( विलोक्य ) कथमयमितस्ततो दत्तदृष्टिर्बटुः पर्यटन्नवलोक्यते ? ।

( प्रविश्य )

बटुः—स्वस्ति यजमानेभ्यः ।

मकरन्दः—बटो ! स्पष्टं प्रकटय त्रासविस्मयकारिणः पुटभेदनस्यास्य स्वरूपमिदानीमेव देशान्तरादुपेयुषामस्माकम् ।

बटुः—महाभाग ! महानयं कथाप्रबन्धः । तमेवं योगीन्द्र एव युष्मभ्यमावेदयितुमलम्भूष्णुः । तदेत यूयम् । पश्यत देवतायतनोपवननिबद्धवासं योगीन्द्रम् ॥

( सर्वे परिक्रामन्ति । )

( ततः प्रविशति कापालिकः । )

कापालिकः—( साश्चर्यं )

आद्यं यत्किल बीजमन्धतमसक्लिष्टस्य दुःखोदधे-
श्चेतः पर्वणि तत्र कुत्रचिदपि श्लाघ्ये समुत्कण्ठते ।
येषस्त्वेष नरास्थिहाररशनाताडङ्कचूडामणि-
प्रायः शंसति तापसीं स्थितिमहो ! रोमाञ्चिताः कौतुकैः ॥६॥

बटुः—( उपसृत्य ) भगवन्! एष सार्थवाहः प्रणमति।

कापालिकः—( कौमुदीं विलोक्य सहर्षमात्मगतं )

यन्निमित्तं पुरा भ्राम्यन् क्लेशावेशमशिश्रियम्।
तदेव स्वयमायातमहो! वेधाः प्रियङ्करः॥ ७॥

१ ( पुनः सादरमिव प्रकाशं ) कोऽत्र भोः!। पाद्यं पाद्यम्, अर्घोऽर्घः। ( पुनर्बटुं प्रति ) उपनयासनानि।

( बटुस्तथाकरोति। )

कापालिकः—सार्थवाह! साम्प्रतं कुतः?।

मकरन्दः—साम्प्रतं व्याघ्रमुखीतः।

( कापालिको बटोः कर्णे एव मेव। )

( बटुः निष्क्रान्तः। )

कापालिकः—(पुनः सस्पृहं कौमुदीमवलोक्य) इयं का?।

मकरन्दः—इयं मे भ्रातृजाया।

कापालिकः—पतिरस्याः सार्थमध्ये तिष्ठति?।

मकरन्दः—अस्याः पत्युरवस्थानं यूयमेव निरर्गलज्ञानजुषो ज्ञास्यथ।

कापालिकः—इयमपरा का?।

मकरन्दः—इयं मे सधर्मचारिणी।

कापालिकः—( कौमुदीमवलोक्य स्वगतं )

चलकमलविलासाभ्यासिनी नेत्रपत्रे
दशनवसनभूमिर्बन्धुजीवं दुनोति।

१ ख–' मधितिष्ठति ' इति।

स्मरभरपरिरोहत्पाण्डिमागूढरूढ-
द्युतिविजितमृगाङ्का मोदते गण्डभित्तिः ॥ ८ ॥
( प्रकाशं मकरन्दं प्रति )
त्वां निध्याय निबद्धवासववपुःस्पर्द्धं स्फुरद्यौवने
चैते प्रीतिरती इव प्रियतमे देवस्य चेतोभुवः ।
स्मृत्वा तस्य कठोरघोरमनसः कृत्यं च पापीयस-
श्चेतो नः प्रैतिकम्पते विघटते संत्रस्यति भ्रश्यति ॥९॥

मकरन्दः—भगवन् ! सर्वं वितथमावेदय ।
( प्रविश्य सम्भ्रान्तः पुरुषो युवतिश्च । )

पुरुषः—( सदैन्यं ) भगवन् ! परित्रायस्व परित्रायस्व ।

युवतिः—( क ) भयवं ! रक्खेहि मं अणज्जविज्जाहरेण अवहरिज्जंतिं ।

कापालिकः—मा भैष्टां मा भैष्टाम्, अस्मदभ्यर्णमपि वसतोर्युवयोर्भिरञ्चिरपि न प्रभविष्णुः । किमङ्ग ! पुनः खेचरखेटः ? ।

पुरुषः—( सकरुणं ) भगवन् ! देहि मे प्राणभिक्षाम् ।

मकरन्दः—( सभयं ) भगवन् ! कुतोऽप्यनयोरियान् प्रतिभयाडम्बरः ? ।

कापालिकः—अस्ति नामैको योनिसिद्धः स च ' पक्ष्म-

( क ) भगवन् ! रक्ष मामनार्यविद्याधरेणापह्रियमाणाम् ।

१ ख-' स्पर्धा ' इति पाठः । २ ख-' पापान्धसः ' इति । ३ ख-' प्रविकम्पते ' इति ।

क्षाशीलक्षमभिरमेत विद्याधरपदकामः ' इत्यलीकां पापीयसीं वैदिकीं वाचमाकर्ण्य पृथिव्यास्तरुणं स्त्रैणमपहरति । परदारव्रतं चानुरुन्धानो भर्तारं व्यापाद्य सभर्तृकामभर्तृकां करोति । इदं च नगरं तेन दुरात्मना विगतमानुषप्रचारं कृतम् । तवापि वनितानिमित्तं व्यसनं सम्भावयामि ।

मकरन्दः—भगवन् ! स पुनः किमर्थमिदमनार्यं कर्म समाचरति ? ।

कापालिकः—महाभाग !

परस्य शर्मणः सत्यं प्रत्यूहो हरिणीदृशः ।
भवेऽपि तद्यदि क्वापि तदा ता एव हेतवः ॥ १० ॥

अपि च—

ताभ्यः सकर्णः को नाम कामिनीभ्यः पराङ्मुखः ? ।
भूर्भुवःस्वर्विभूतीनां सौभाग्यं यत्प्रसादतः ॥ ११ ॥

पुरुषः—समादिशन्तु मे कृत्यं योगीन्द्रपादाः ।

कापालिकः—सप्तमं दिनमिदं विद्याधराधमाकर्षणविधिमनुतिष्ठतामस्माकम्, तदियं ते पत्नी पुरोवर्तिनीनामेकचक्राकामिनीनां मध्ये यामद्वयमस्मत्पातालभवनमधिवसतु । एकाकिनः पुनः पुरुषस्य न समुचितः परदाराणां मध्येऽधिवासः । ततस्त्वं कियन्तमपि कालं क्वचिदपि गत्वातिवाहय ।

( पुरुषो निष्क्रान्तः । )

मकरन्दः—( सभयमात्मगतं ) ममापि कौमुदीमुपमित्रे पातालभवनमधिवासयितुमुचि॰

कापालिकः—अद्य पुनर्निशीथसमये मन्त्रेण तन्त्रेण च तं दुरात्मानमाक्रम्य मोचयिष्यामि निःशेषमप्यपहृतं यौवतम् । ( पुनर्विमृश्य ) कोऽत्र भोः ! ।

( प्रविश्य )

तापसः—एषोऽस्मि ।

कापालिकः—मायामय ! आकारय कियतीरपि युवतीर्येनेयं ताभिर्विदितमार्गाभिः सह पातालवेश्मनि प्रविशति ।

( तापसो निष्क्रान्तः । )

( ततः प्रविशन्ति पातालभवनादागमनं नाटयन्त्यः पञ्चषा योषितः। )

( योषितः कापालिकं प्रणम्य कौमुदीसुमित्रयोः पादौ संस्पृशन्ति । )

कापालिकः—( युवतिं प्रति ) व्रज पातालभवनमेताभिः सह ।

मकरन्दः—भगवन् ! एते अपि कौमुदीसुमित्रे यामद्वयं पातालगृहमधितिष्ठताम् ।

कापालिकः—( स्वगतं ) प्रियं नः । ( प्रकाशं ) यद्भवते रोचते तदस्तु ।

( सर्वाः पातालभवनप्रवेशं नाट्यन्ति । )

कापालिकः—( विमृश्य ) सार्थवाह ! इदानीं विद्याधराकर्षणहोमसमयः । ततस्त्वया क्रियमाणं साहायकं किमपि मृगयामहे ।

मकरन्दः—भक्त्यैवाहमकुतोभयस्ततः स्वैरमादिशत

---

१ ख–' भुवमे ' इति ।

यूयम् ।

कापालिकः—त्वया समाकृष्टकरालकरवालेन निष्कम्पमनसा होमशवस्य पुरतः स्थातव्यम् । होममण्डले च नापरस्य मन्त्रस्य वा दैवतस्य वा कस्यापि प्रवेशः समुचित इति न त्वया प्रतिभयाकुलेन मनसि किमपि ध्यातव्यम् ।

मकरन्दः—एवं करिष्यामि ।

( प्रविश्य )

मायामयः—भगवन् ! सर्वं प्रगुणमेव पूजोपकरणम् तदागच्छत होमवेदिकाम् ।

( सर्वे परिक्रामन्ति । )

मायामयः—

एतानि होमविधये ज्वलितानलानि
कुण्डानि सैष वनसैरिभपुच्छदीपः ।
एतद्वपुश्च पुरुषस्य सलक्षणस्य
निर्जीवमेष पुनरत्रवसोपहारः ॥ १२ ॥

कापालिकः—पुरुषस्य वपुः क्व वर्तते ? ।

( प्रविश्य भट्टः पुरुषस्य वपुर्मण्डलमध्ये विमुच्य निष्क्रान्तः । )

कापालिकः—(पुरुषवपुषः कुण्डानां च पूजां विधाय मकरन्दं प्रति )

मन्त्रापविद्धं यद्येतद्वपुर्भ्राम्यति मण्डले ।
तथापि न त्वया स्थानात् कम्पनीयमितस्ततः ॥ १३ ॥

मकरन्दः—आवश्यकमेतत् ।

कापालिकः—मायामय ! उपनय पुरुषवपुषः करवालम् ।

( मायामयस्तथाकरोति । )

( कापालिकः वसारसोपलिप्तान्यन्त्रखण्डानि जुहोति । )

मकरन्दः—( स्वगतं ) अपि नाम कोऽप्यपायः सम्भवेत्, तदहं परमेष्ठिनामपवित्रं मन्त्रं स्मरामि । ( पुन. साशङ्कं ) कथं प्रहसति प्रचलति च पुरुषः ? ।

कापालिकः—( मकरन्दं प्रति ) समय इदानीं शवोत्था-स्य । ततस्त्वया सावधानेन भवितव्यम् ।

( पुरुषस्य वपुः करवालमादाय मकरन्दाभिमुखं कतिचि-त्पदानि दत्त्वा पुनर्मण्डलमध्ये निपतति । )

कापालिकः—( ससम्भ्रमं ) किमपि दैवतं स्मरन्नासि ।

मकरन्दः—न किमपि स्मरामि ।

( कापालिकः सविशेषमन्त्रखण्डानि जुहोति । )

( पुनः पुरुष उत्थाय तथैव निपतति । )

कापालिकः—( साक्षेपं ) महाभाग ! किमिति कमपि तं स्मृत्वा होमभङ्गं करोषि ? ।

मकरन्दः—सर्वथा नाहं किमपि स्मरामि ।

( कापालिकः पुन' साक्षेपं मन्त्रमुच्चारयन्नन्त्रखण्डानि जुहोति । )

( पुनः पुरुषवपुर्मकरन्दाभिमुखं गत्वा प्रतिनिवृत्य च करवालेन कापालिकमभिहन्ति । )

( कापालिक आक्रन्दमाधाय तिरोधत्ते । )

मकरन्दः—(विलोक्य ससम्भ्रमं) कथं पतितं पुरुषवपुः ?, तिरोहितः क्वापि कापालिकः ? । ( पुनर्दिशोऽवलोक्य ) कथं मायामयादिकः परिवारोऽपि न दृश्यते ? । भवतु तावत्, पातालभवनतः कौमुदीसुमित्रे समाह्वयामि । (परिक्रम्य सविषादं) कथं न किमपि पातालभवनं दृश्यते ? । नूनमभुना कापालिकेन वञ्चितोऽस्मि ।

( नेपथ्ये )

मकरन्द ! तूर्णमेहि व्रजति गृहीत्वा समग्रमपि सार्थम् ।
व्यापाद्य तव पदातीन्नरदत्तः स्वां पुरीमेषः ॥ १४ ॥

मकरन्दः—( आकर्ण्य ) कथं सार्थेऽप्युपद्रवस्तदहं गत्वा सम्भावयामि ।

( इति निष्क्रान्ताः सर्वे । )

॥ अष्टमोऽङ्कः समाप्तः ॥

---

॥ अथ नवमोऽङ्कः ॥

( ततः प्रविशति युवराजो लक्ष्मीपतिरमात्यश्च नारायणश्च । )

युवराजः—( ससम्भ्रमं ) कोऽत्र भोः ! कञ्चुकिपु ? ।

( प्रविश्य )

कञ्चुकी—एषोऽस्मि ।

युवराजः—समादिश अगदङ्कारमात्रेयम् । यथा देव्य

१ क–' नूनमधुना ' । २ ख–' समस्तमपि ' ।

अनङ्गसेनाया वपुषि सावधानेन भाव्यम् ।

( कञ्चुकी निष्क्रान्तः । )

( नेपथ्ये )

सरसिजवनमपवन्ध्यं दिशो वितमसो दृशः सकलभावाः ।
अवतरति नभोमित्रे वसुधायां कस्य नानन्दः ? ॥ १ ॥

चारायणः—देव ! शुभोदर्कं मित्रोदयं मागधः पठितवान् ।

युवराजः—अमात्य ! मित्राणन्दशब्दयोराकर्णनादुद्वेजिताः स्मः ।

पूर्जम्भारिपुरोपमानममरस्तम्बेरमस्पर्धिनो
नागाः सूर्यतुरङ्गनिर्जयजवैर्विभ्राजिनो वाजिनः ।
राज्यश्रीककुदं तदेतदखिलं यन्मन्त्रलीलायितं
तस्याहिद्वितयीं शिरस्यवहतो धिग् नः कृतघ्नानिमान् ॥२॥

(पुनर्विमृश्य) अमात्य ! वचस्विनामवाच्यं श्रद्धालूनामश्रद्धेयं महीयसामश्रोतव्यमैहिकामुष्मिकापायमत्यन्तमशेवन्ध्यमतिना कामरतिना पश्य कीदृशमनुष्ठितम् ? ।

चारायणः—देव ! किमनुष्ठितवानमात्यः कामरतिः ? ।

युवराजः—अस्माकं जीवितैकनिदानं मित्राणन्दाभिधानं तत्पत्नीमभिलाषुकः कामरतिः स्वनगरं प्रति प्रस्थापितो मित्राणन्द इति प्रवादं विधाय विजयवर्मणे व्यापादयितुमुपनीतवान् ।

चारायणः—देव !

जनुषान्धा न पश्यन्ति भावान्केवलमैहिकान् ।
ऐहिकामुष्मिकान्कामकामलान्धाः पुनर्जनाः ॥ ३ ॥

युवराजः—ततः परं च रत्नाकरभङ्गेन तस्य किमपि संवृत्तमिति न जानीमः । तत्पत्नी पुनः कौमुदी व्याघ्रमुख्यां तिष्ठतीत्यस्ति किंवदन्ती ।

( प्रविश्य )

प्रतीहारः—देव ! देशान्तरतः समायातो नरदत्तः सार्थवाहो युवराजपादान्द्रष्टुमभिलषति ।

चारायणः—देव ! क्रमागतविभूतिर्महानयं नरदत्तः सार्थवाहस्तदमुं महता गौरवेण देवो द्रष्टुमर्हति ।

युवराजः—( सादरं ) त्वरिततरं प्रवेशय ।

( ततः प्रविशति उपायनीकृतरत्नभृतभाजनहस्तेन पुरुषेणानुगम्यमानो नरदत्तः । )

( नरदत्त उपायनभाजनमुपनीय प्रणमति । )

युवराजः—( ससम्भ्रमं ) क्षेमं यात्रिकाः ! समायाताः स्थ ? । निरुपद्रवः सर्वोऽपि सार्थलोकः ? !

नरदत्तः—देवस्य विक्रमबाहोर्युवराजस्य च लक्ष्मीपतेः प्रभावेन ।

चारायणः—देव ! वेलन्धरमशेषमपि नरदत्तस्य यानपात्रयातायातैः समृद्धवैभवम् ।

युवराजः—वेलन्धराभ्यर्णमशेषोऽपि सार्थः प्रविष्टः ? ।

चारायणः—देव ? सार्थस्य कियानपि निष्कम्पोऽस्ति ।

( पुनर्नरदत्तं प्रति ) विज्ञपय यथार्थं विष्कम्भस्वरूपं देवाय ।

**नरदत्तः**—( सविनयं ) देव ! सुवर्णद्वीपात्प्रतिनिवृत्तस्य ममैकः पटचरवृत्तिर्वणिक्पुत्रः संघटितः । स च मया क्रयकौशलानुरञ्जितेन स्वसार्थे प्रधानः कृतः । स चेदानीं मदीयोऽयं सार्थो न ते किमपि लभ्यमस्तीति व्याहरति ।

**युवराजः**—अहो ! अराजन्वती वसुमती । (पुनर्विमृश्य) अमात्य ! नैकस्य संलापश्रवणेन निर्णयः कर्तुं शक्यते । अतो द्वितीयमपि पृच्छामि ।

**चारायणः**—कोऽत्र भोः ? अस्मत्परिजनेषु ? ।

( प्रविश्य )

**देवशर्मा**—एषोऽस्मि ।

( चारायणः कर्णे एवमेव । )

( देवशर्मा निष्क्रान्तः । )

( ततः प्रविशति मकरन्दो देवशर्मा च । )

**मकरन्दः**—( सविषादमात्मगतं )

विच्छेदः पितृबान्धवैः प्रवहणस्योदन्वति भ्रंशनं
　प्राणेभ्योऽप्यधिकं प्रियेण विरहो मित्रेण पुण्यात्मना ।
कान्ताया नवसंगमेऽप्यपहृतिः सर्वस्वनाशोऽधुना
　नव्यं नव्यमुदेति कन्दलमहो ! प्रातीपिके वेधसि ॥४॥
　खलुकृत्वा नातीतव्यसनशोचनम् ।
　आजन्म यानि जायन्ते व्यसनानि सहस्रशः ।

स्मर्यन्ते तानि चेन्नित्यं कोऽवकाशस्तदा मुदाम् ?॥५॥

भवतु, प्रणमामि।

युवराजः—अये वाणिज्यकारक! किं-निदानोऽयं नरदत्तेन सह विवादः ?।

मकरन्दः—(सविनयं) देव! सुवर्णद्वीपात्प्रतिनिवृत्तस्य ममायं पथ्वरहृत्तिर्नरदत्तः संघटितः। क्रयविक्रयकौशलानुरञ्जितेन च मया स्वसार्थे प्रधानः कृतः। अयं चेदानीं मदीयोऽयं सार्थो न ते किमपि लभ्यमस्तीति व्याहरति।

(युवराजः स्मित्वा चारायणमुखमवलोकयति।)

चारायणः—देव! क्रमागतोऽयं नरदत्तस्तदस्य सत्येषु नः सम्प्रति प्रतिपत्तिरस्ति। देशान्तरिणः पुनरस्य स्वरूपं नावगच्छामः।

युवराजः—अमात्य!

समूलकाषं कषतां द्विषन्मही
शिशून् पितृभ्यां हरतां च निर्दयम्।
अपक्षपातेन यदर्थनिर्णय-
स्तदेव धर्मः किमपि क्षमाभुजाम्॥६॥

चारायणः—ततः किम्?।

युवराजः—

समानशीलसंतानयुक्तिव्यापारयोर्द्वयोः।
विना विशेषचिह्नेन युक्तो नैकत्र निर्णयः॥७॥

**मकरन्दः**—देव ! विशेषचिह्नमप्यस्ति ।

**युवराजः**—कोऽवकाशस्तर्हि विवादस्य ? ।

**मकरन्दः**—देव ! सुवर्णेष्टिकासम्पुटानि यानि तानि सर्वाण्यपि मन्नामाङ्कितानि ।

**युवराजः**—देवशर्मन् ! ससुवर्णसम्पुटं सुवर्णकारमाकारय ।

( देवशर्मा निष्क्रान्तः । )

( प्रविश्य सुवर्णकारः सम्पुटान्युपनयति । )

**युवराजः**—(सर्वतोऽवलोक्य) कथं न कुत्राप्यभिधानम् ? । ( पुनः साक्षेपं ) अरे ! कोऽयमसत्यालापः ? ।

**मकरन्दः**—द्वेधा विधाप्य सम्पुटानि मध्यमवलोकयतु देवः ।

**युवराजः**—( तथा कृत्वा मध्यमवलोक्य च सविस्मयं ) कथमुभयतोऽपि सम्पुटेषु मकरन्दाभिधानम् ? । ( पुनः साक्षेपममात्यं प्रति ) क्रमागतस्य नरदत्तस्यायमीदृशो युष्माकं सत्यप्रत्ययः ।

**नरदत्तः**—( सविनयं ) देव ! विज्ञपनीयमस्ति ।

**युवराजः**—( साक्षेपं ) अतः परमपि किमपि विज्ञपनीयमस्ति ? । भवतु, विज्ञपय ।

**नरदत्तः**—देव ! बाल्येऽपि मे पिता विपन्नः । इदानीमहमनुजश्चायं द्वावेव कुटुम्बे पुरुषौ ।

**युवराजः**—ततः किम् ? ।

नरदत्तः—अहमपि निरपत्यः, भ्रातैव मे अपत्यम्। तदस्यैव नाम्ना क्रेयं च वस्तु। अयं च मकरन्दाभिधानः। अत्र चार्थेऽमात्यः पौरलोकश्च प्रमाणम्।

चारायणः—देव! अयमुपायनभाजनग्राही भ्राताऽस्य मकरन्दाभिधानः।

युवराजः—कोऽत्र भोः!।

( प्रविश्य )

प्रतीहारः—आदिशतु देवः।

युवराजः—कियतोऽपि वणिजः समाह्वय।

( प्रतीहारो निष्क्रान्तः )

( प्रविश्य कृतोष्णीषाः पञ्चषा वणिजः प्रणमन्ति। )

युवराजः—तातस्य विक्रमबाहोराज्ञा भवतां यदि पक्षपातेन वदत। ततः कथयत को नरदत्तस्य भ्राता? किमभिधानश्च?।

वणिजः—( सभयं ) देव! नरदत्तस्यायं भ्राता मकरन्दाभिधानः।

( युवराजः साटोपं मकरन्दमवलोकयति। )

मकरन्दः—( सदुःखमात्मगतं )

प्रत्यहं नव्यनव्याभिर्भवन्तीभिर्विपत्तिभिः।
आस्तां नाम परस्तावदात्मापि मम भग्नवान्॥ ८॥

( प्रकाशं ) देव! अपरमप्यभिज्ञानमस्ति। इला मे गोत्रदेवता। तदभिधानेनापरमिलादत्त इत्यपि नाम। ततः किय-

न्त्यपि सम्पुटानीलादत्तनामाङ्कितानि । ततस्तान्यपि विलोकयतु देवः ।

युवराजः—( तथा कृत्वा ) कथमेतानि इलादत्तनामाङ्कितानि ? । ( पुनः सरोषं नरदत्तं प्रति ) अतः परमपि विज्ञप्यमत्रशिष्यते किमपि ? ।

नरदत्तः—( सावष्टम्भं ) अवशिष्यते ।

युवराजः—( विहस्य ) त्वरिततरं विज्ञपय ।

नरदत्तः—देव ! इलादत्ताभिधानो मे [1]भागिनेयः,ततः सुवर्णद्वीपस्थितेन मया सोमपरिवेषपर्वणि सम्पुटानां शतमष्टोत्तरं तन्नामाङ्कितं कृतम् । अत्राप्यर्थे पौरलोकः प्रमाणम् ।

( युवराजो वणिजां मुखान्यवलोकयति । )

वणिजः—अस्तीलादत्ताभिधानो नरदत्तभागिनेयः ।

युवराजः—( साक्षेपं मकरन्दं प्रति ) अरे दाम्भिक ! कूटप्रयोगैरस्माकं वणिजां च दुष्कीर्तिमुत्पादयसि ? ।

मकरन्दः—( सावष्टम्भं ) उपायनीकृतरत्नानां प्रभावातिशयं नरदत्तमापृच्छतु देवः ।

युवराजः—नरदत्त ! कस्य रत्नस्य कः प्रभावातिशयः? ।

नरदत्तः—( सक्षोभं ) देव ! सर्वाण्यपि रत्नानि सप्रभावाणि । परं न कदाचिदपि निरूपितप्रत्ययानि ।

युवराजः—( नरदत्तं प्रति ) यदि त्वदीयानि रत्नानि तदा निस्सन्देहमभिदधीथाः ।

---

१ ख–' भागेयः ' इति ।

मकरन्दः—देव ! निःसंदेहमभिहिते भवन्ति मदीयानि रत्नानि ?।

युवराजः—अवश्यं भवन्ति ।

मकरन्दः—देव ! रत्नमिदं स्पर्शमात्रेण शूलमपनयति । यदि चायमर्थो विसंवदति तदा शिरश्छेदेन दण्डः ।

( प्रविश्य संभ्रान्तः )

कञ्चुकी—

देवी कण्ठगतप्राणा शूलवेदनयाऽधुना ।
अतः परं विधेयं तु युवराजोऽवगच्छति ॥ ९ ॥

युवराजः—कञ्चुकिन् ! रत्नमिदमुपनय देव्याः, येन समूलं शूलं प्रणश्यति ।

( कञ्चुकी रत्नमादाय निष्क्रान्तः । )

( नरदत्तः सभयमपवार्य उपायनवाहिनः कर्णे एवमेव । )

( उपायनभाजनवाही निष्क्रान्तः । )

( प्रविश्य )

चेटी—( क ) भट्टा ! दिट्ठिया दिट्ठिया ।

युवराजः—( सरभसं ) केरलिके ! त्वरिततरमानन्दस्य निदानं विज्ञपय ।

चेटी—( ख ) रयणस्स पभावेण भट्टिणी ववगयशूलवेअणा संजादा ।

---

(क) भर्तः ! दिष्ट्या दिष्ट्या ।

(ख) रत्नस्य प्रभावेन भट्टिनी व्यपगतशूलवेदना संजाता ।

युवराजः—(सक्रोधं) अमात्य ! कैतवमयोगैर्देशान्तारिणां धनमपहृत्यास्माकमकीर्तिमुत्पादयतो नरदत्तस्य को दण्डः? ।

चारायणः—( सकम्पं ) यं देवः समादिशति ।

युवराजः—तर्हि श्वपाकमाकार्य सकुटुम्बमेनं नरदत्तमस्माकं पश्यतां शूलमारोपय ।

( नरदत्तः कम्पते । )

चारायणः—( उच्चैः स्वरं ) भो अस्मत्परिजनाः ! सशूलं श्वपाकमाकारयत ।

( प्रविश्य ) २०

प्रतीहारः—देव ! सर्वदेशाचारभाषावेषकुशलो वर्वरकूलवासी वणिज्यकारको द्वारि वर्त्तते ।

( प्रविश्य )

श्वपाकः—(क) अमच्च ! एशे चिट्ठामि ।

चारायणः—अरे पिङ्गलक ! सकुटुम्बमेतं नरदत्तं शूलमारोपय ।

युवराजः—( प्रतीहारं प्रति ) प्रवेशय वणिज्यकारकम् ।

( प्रविश्य वर्बरो दुरस्थः प्रणमति । )

युवराजः—वणिज्यकारक ! केन प्रयोजनेन वेलन्धरमवतीर्णोऽसि ? । २०

(क) अमात्य ! एष तिष्ठामि ।

बर्बरः—(क) भट्टा ! पाणाहिंतो पि पियदले एगे मे भाया। शे लूंशिय गिहादो नीशलिदे।

युवराजः—ततः किं ?।

बर्बरः—(ख) शे दाणिं वेलंधरे पविष्टे चिष्टदि।

युवराजः—(मकरन्दमुद्दिश्य) एकस्तावदयं वैदेशिको वेलन्धरे प्रविष्टोऽस्ति।

बर्बरः—(ग) हा भाय ! चिला दिष्टो सि। (इत्यभिदधानो मकरन्दं परिरभ्य तारस्वरं प्रलपति।)

युवराजः—(ससम्भ्रमं) कथमयं मकरन्दो म्लेच्छजातिः ?। दुरात्मनाऽमुना म्लेच्छेन नरदत्तस्य वेश्मनि भोजनशयनाभ्यां वर्णशङ्करः कृतः।

मकरन्दः—(स्वगतं) शूलवेदनापहारेण मयि पक्षपात्यपि कुमारस्तेनामुनोपलिङ्गान्तरेण प्रतिपक्षतां यास्यति।

विरलविपदां कथञ्चिद्विपदो हर्तुं समीहते लोकः।
प्रतिपदनवविपदां पुनरुपैति मातापि निर्वेदम् ॥१०॥

तदतः परं कृतमुपायान्तरविमर्शनेन। यद्भाव्यं तद्भवतु।

युवराजः—(प्रतीहारं प्रति) उपनय दुरात्मानमेनं श्वपाकाय।

---

(क) भर्तः ! प्राणेभ्योऽपि प्रियतरः एको मे भ्राता। स रुषित्वा गृहान्निःसृतः।

(ख) स इदानीं वेलन्धरे प्रविष्टः तिष्ठति।

(ग) हा भ्रातः ! चिराद् दृष्टोऽसि।

( प्रतीहारो मकरन्दं केशैराकृष्य श्वपाकायोपनयति । )

( नेपथ्ये )

अलमलं क्रूरेण कर्मणा ।

युवराजः—(सक्रोधं) अरे ! कोऽयं कृतान्तवदनं स्पृहयालुरस्मदाज्ञां प्रतिरुणद्धि ? ।

प्रतीहारः—देव ! व्याघ्रमुखीपतिर्वज्रवर्मा युष्मदाज्ञां प्रतिरुणद्धि ।

युवराजः—( सदर्पं ) अस्मदाज्ञां प्रतिरोद्धुं शक्तिरस्ति पदातिपांशोर्वज्रवर्मणः ? । ( पुन श्वपाकं प्रति ) आरोपय शूलमेतं दुरात्मानम् ।

( श्वपाको मकरन्दमुत्क्षिपति । )

( नेपथ्ये )

अहो ! अब्रह्मण्यमब्रह्मण्यम् । अहह ! पापकारित्वं ।

युवराजः—( साक्षेप ) अरे ! कोऽयमस्मान् भूयो भूयस्तिरस्करोति ? ।

( प्रविश्य वज्रवर्मणा सह )

मित्राणन्दः—कुमार ! कोऽयं विचारव्यामोहः ? ।

युवराजः—( प्रत्यभिज्ञाय ) कथमयमस्मत्प्राणस्वामी मित्राणन्दः ? । ( पुनः स्वसिंहासने समुपवेश्य ) आर्य ! किं तवाऽयं मकरन्दः ? ।

मित्राणन्दः—ममाऽयं भ्राता मकरन्दः ।

युवराजः—अरे बर्बर ! किमिदम् ?

बर्बरः—( सकम्पं ) ( क ) नरदत्तेण एदं कवडं कालाविदे ह्मे ।

वज्रवर्मा—ममायं मकरन्दो जामाता ।

युवराजः—( सपश्चात्तापं )

अमर्षमात्सर्यविमोहकैतवै-
रसून्हरन्तो नयशालिनामपि ।
शुभेषु वृत्तिं दधतोऽपि केषुचि-
त्पतन्त्यगाधे तमसि क्षितीश्वराः ॥ ११ ॥

( पुनरमात्यं प्रति ) आरोपय सबर्बरं नरदत्तं शूलम् । इह समानय कृतस्नानं मकरन्दम् । भवत्वस्माकं दुर्नयस्य प्रायश्चित्तम् ।

वज्रवर्मा—मित्राणन्दसम्पर्कपर्वणि न समुचितः प्राणिवधः

मित्राणन्दः—कुमार ! सर्वस्याप्यपराधस्यास्मदागमनमेव दण्डः ।

युवराजः—( सविनयं )

एतद्दिनं सुदिनमेष विशेषकश्च
द्वीपः क्षितेः पुरमिदं च पुरां पताकम् ।
यस्मिन् पवित्रमनसो यशसो निशान्तं
युष्मादृशाः पथि भवन्ति दृशां शरण्याः ॥ १२ ॥

ततः कथयत केयमनभ्रा सुधावृष्टिः ? ।

---

( क ) नरदत्तेन एतत्कपटं कारितोऽहम् ।

**वज्रवर्मा**—सर्वमहं रजन्यां विज्ञपयिष्यामि । इदानीं पुनर्मध्याह्नसन्ध्यामाधातुं प्रयातु देवः । मित्राणन्दोऽप्यध्वश्रममपनयताम् ।

**चारायणः**—देव ! यदभिधत्ते वज्रवर्मा तदस्तु ।

( इति निष्क्रान्ताः सर्वे । )

**॥ नवमोऽङ्कः समाप्तः ॥**

---

**॥ अथ दशमोऽङ्कः ॥**

( ततः प्रविशति पञ्चभैरवः । )

**पञ्चभैरवः**—( उच्चैःस्वरं ) हंहो विद्याधराः ! स्वयं रत्नकूटाधिपतिर्वः समादिशति । द्रुतमाकारयत दक्षिणाश्रमवासिनीं लम्बस्तनीम् । तौ च वध्यौ कुतोऽपि गवेषयित्वा समानयत । पुरुषोत्तमं च तं जीवितदायिनं संघटयत ।

( नेपथ्ये )

यदादिशति सिद्धपरमेश्वरस्तदचिरादेव सम्पादयामि ।

**पञ्चभैरवः**—तर्हि गत्वा विज्ञपयामि सिद्धाधिपतये । ( इति परिक्रामति । विलोक्य ) कथमियमुत्तराश्रमवासिन्याः कुन्दलतायास्तापसी क्षेमङ्करी ? ।

( प्रविश्य )

क्षेमङ्करी—( क ) अय्य पंचभेरव ! सिद्धाहिवदिणो दंसणमहिलसामि ।

पञ्चभैरवः—भद्रे ! प्रहारवेदनाभिरतितरामस्वस्थशरीरः साम्पतं सिद्धपरमेश्वरो वक्तुमपि न प्रभविष्णुः । ततो दृष्ट्वा किं करिष्यसि ? ।

क्षेमङ्करी—(ख) पहारवेअणोपसमणत्थं चेय दंसणमभिलसामि ।

पञ्चभैरवः—सत्वरमागच्छ पश्य तर्हि कामकाननकदलीगृहमधिशयानं सिद्धाधिनाथम् ।

( ततः प्रविशति यथानिर्दिष्टः सिद्धाधिनाथः सुघण्टनन्दिघोषप्रभृतिकश्च परिवारः । )

सिद्धाधिनाथः—( प्रहारवेदनामभिनीय ) अहह ! ।

सुघण्टः—देव ! किं प्रहारव्रणमियन्तं कालमवतिष्ठते ? ।

सिद्धाधिनाथः—कुपितदेवताप्रहारोऽयं न संरोहिणीमौषधीं विना प्रशाम्यति ।

नन्दिघोषः—किमसाध्या संरोहिणी सिद्धपरमेश्वरस्य ? ।

( सिद्धाधिनाथः दीर्घं निःश्वस्य तूष्णीमास्ते । )

पञ्चभैरवः—देव ! क्षेमङ्करी प्रणमति ।

सिद्धाधिनाथः—क्षेमङ्करि ! निष्पत्यूहव्रतानुष्ठाना कुशलवती कुन्दलता ? ।

(क) आर्य पञ्चभैरव ! सिद्धाधिपतेर्दर्शनमभिलषामि ।

(ख) प्रहारवेदनोपशमनार्थमेव दर्शनमभिलषामि ।

क्षेमङ्करी—( क ) सिद्धाहिवदिणो पसादेण[1] । ( पुनः सविनयं ) एदं[2] विन्नवेदि कुन्दलता । अत्थि अम्हाणं आसमे मंतिओ अदिधी । सो मंतेण तंतेण य पहारवेयणं पडिहणेदि ।

सिद्धाधिनाथः—मन्त्रविस्तरं विधापयितुं वयमिदानीमनोजस्विनः । तन्त्रप्रयोगं यदि करोति तदा कुरुताम् ।

( क्षेमङ्करी निष्क्रान्ता । )

सिद्धाधिनाथः—( सविषादं ) अहो ! वैचित्र्यं कालस्य, प्रहारवेदनामुपशमयितुं वयमपि साम्प्रतमपरस्य मुखमीक्षामहे ।

( पुनः स्मृत्वा )

अनुजग्राह नस्तत्र स्वक्लेशमुपगम्य यः ।
निसर्गसुहृदस्तस्य वणिजः किं वितन्महे ? ॥ १ ॥

( पुनः सविषादं )

परस्मादुपकारो यः सोऽपि व्रीडावहः सताम् ।
तस्यामत्युपकारस्तु दुनोत्यन्तः पशूनपि ॥ २ ॥

( नेपथ्ये )

परिमलभृतो वाताः शाखा नवाङ्कुरकोटयो

---

( क ) सिद्धाधिपतेः प्रसादेन । एतद्विज्ञपयति कुन्दलता । अस्ति अस्माकमाश्रमे मान्त्रिकोऽतिथिः । स मन्त्रेण तन्त्रेण च प्रहारवेदनां प्रतिहन्ति ।

१ ' पसाएण ' क–पुस्तके । २ ' एवं ' क–पुस्तके ।

मधुरविरुतोत्कण्ठाभाजः प्रियाः पिकपक्षिणाम् ।
विरलविरलस्वेदोद्गारा वधूवदनेन्दवः
प्रसरति मधौ धात्र्यां जातो न कस्य गुणोदयः ? ॥३॥

सुघण्टः—देव ! शुभोदर्कं मागधः पठितवान् ।

सिद्धाधिनाथः—अद्य केनाप्यचिन्त्येन हेतुनाऽस्माकं मानसमपि प्रवर्द्धमानोत्साहम् । (पुनर्नन्दिघोषं प्रति) समादिश कामपरिचारकं ब्रह्मलयम् । यथा, वयमद्य निशीथे स्वयं बलिकर्म विधास्यामः । ततो भगवतः पञ्चबाणस्य पूजाविशेषः कोऽपि विपञ्चनीयः ।

( नन्दिघोषो निष्क्रान्तः । )

( प्रविश्य )

क्षेमङ्करी—( क ) एदिणा तंतेण अवलिंपेदु पहारवणं सिद्धाहिवई ।

सिद्धाधिनाथः—( तथाकृत्वा सविस्मयं ) कथं क्षणादेव सर्वथाप्यलक्ष्यः महारव्रणः समजनि ? । ( पुनः सविमर्शं ) कथमिदं तदेवास्माकीनमौषधम् ? । ( क्षेमङ्करीं प्रति ) सुमुखि ! स त्वदीयो मान्त्रिकः किमपरमपि किमपि जानाति ? ।

क्षेमङ्करी—( ख ) अवरं पि पियसंपओगं जाणादि ।

सिद्धाधिनाथः—कोऽप्यस्माकं व्यापादयितुं, प्रियः कोऽपि पूजयितुं, तदुभयस्यापि संयोगमाधातुमूर्जस्वलः ? ।

---

( क ) एतेन तन्त्रेणावलिम्पतु प्रहारव्रणं सिद्धाधिपतिः ।

( ख ) अपरमपि प्रियसंप्रयोगं जानाति ।

**क्षेमङ्करी**—( क ) अध इं ? । 18

**सिद्धाधिनाथः**—( सौत्सुक्यं ) समादिश कुन्दलताम् । यथा, निकषा कामायतनं स्वयं सन्निहिता विधापय मान्त्रिकेण प्रियजनसंघटनार्थं मन्त्रोपचारम् ।

( क्षेमङ्करी निष्क्रान्ता । )

( प्रविश्य कटितटं नर्तयन्ती लम्बस्तनी प्रणमति । )

**सिद्धाधिनाथः**—( ससंरम्भं ) लम्बस्तनि ! इदमासनमास्यताम् । ( पुनः सौत्सुक्यं ) अस्मन्मनोरथानुरूपं किमप्याचरत्यात्रेयी ? ।

**लम्बस्तनी**—( सोद्वेगं ) ( ख ) न किं पि ।

**सिद्धाधिनाथः**—हा हताः स्मः । ( पुनः सविषादं ) लम्बस्तनि ! स एष ग्रैवेयकप्रवासप्रसादो यदस्माकमपि दौर्भाग्यम् । ( पुनः सोपहासं ) सूत्रधारी खलु भवती विकटकपटनाटकघटनासु, ततस्त्वमपि भग्नासि ।

**लम्बस्तनी**—( ग ) किमहं करेमि ?, सा खु अत्तेई न आहरदि न जंपेदि, णवरं तवोविहाणकदनिच्छया रोअंती चिट्ठदि । 34

---

( क ) अथ किम् ? ।

( ख ) न किमपि ।

( ग ) किमहं करोमि ?, सा खलु आत्रेयी नाहरति न जल्पति, नवरं तपोविधानकृतनिश्चया रुदती तिष्ठति ।

**सिद्धाधिनाथः**—( प्रणम्य )

जनमहितमहिम्नां विष्णुशम्भुस्वयम्भू-
हरिहयहिमधाम्नां दुर्यशोनाट्यबीजम् ।
कृततरुणिमयाधन्मानिनीमानभङ्गः
प्रथयतु महतीं नस्तां समीहामनङ्गः ॥ ७ ॥

( पुनः सिंहासनमलङ्कृत्य सोत्कठं )

हिमकरकराकीर्णा रात्रिर्मधुः कलितोदयो
गलितकुसुमैश्छन्ना भूमिः सचापकरः स्मरः ।
मिथुनघटनादक्षं मित्रं प्रिया प्रणयोन्मुखी
विधिरयमियान्सम्पद्येत प्रसीदति वेधसि ॥ ८ ॥

( ततः प्रविशति लम्बस्तनी आत्रेयी च । )

**सिद्धाधिनाथः**—( आत्रेयीमवलोक्य सविस्मयं )

चक्षुर्बाष्पविकज्जलं करतलव्यासङ्गखण्डद्युति-
र्गण्डश्रीरधरः खरः प्रसमरैः सूत्कारतारोर्मिभिः ।
आहारप्रतिरोधकीकसशिरामात्रा च गात्रावनि-
र्दृष्टिं प्रीणयते तथापि सुदती लेखेव शीतत्विषः॥९॥

**लम्बस्तनी**—( क ) वत्से ! पणमेहि सिद्धनाहं ।

( आत्रेयी प्रणम्य सलज्जमधोमुखीभवति ) ।

**सिद्धाधिनाथः**—

सौभाग्यद्रुममञ्जरि स्मरकरिक्रीडैकरेवावने !
लावण्यस्य तरङ्गिणि ! त्रिभुवनप्रह्लादनाचण्डिके ! ।

---

( क ) वत्से ! प्रणम सिद्धनाथम् ।

वक्त्राम्भोजमुदस्य पश्य सुदति ! स्वर्भूर्भुवश्चक्षुषां
साफल्यैकनिबन्धनं भगवतश्चेतोभुवो मन्दिरम् ॥१०॥
( आत्रेयी सव्रीडं तूष्णीमास्ते । )

**सिद्धाधिनाथः**—( सोत्कण्ठं )
वक्त्रं विलक्ष्म सततोदयदर्पिते च
नेत्रे शठेन सृजता मदिरेक्षणायाः ।
धात्रा कलङ्कविनिमीलनपांसुराणां
किं नाम नायकृतमिन्दुसरोरुहाणाम् ? ॥ ११ ॥

( पुनरपवार्य ) लम्बस्तनि ! सर्वमपि कामकर्तव्यं शिक्षित-स्त्वया वध्वः ? ।

**लम्बस्तनी**—( क ) अध इं ? ।

**सिद्धाधिनाथः**—( आत्रेयीं प्रति ) भद्रे ! स्वयं सन्निहिते भगवति पञ्चबाणे कोऽयं प्रियसम्पर्कनिमित्तं क्लेशाभ्युपगमः ? । अभ्युपगच्छ स्वच्छेन चेतसा सत्यावपातस्य भगवतः पञ्चबाणस्य पुष्पोपहारम्, येनायं प्रसद्य प्रयच्छति ते प्रियपतिम् । अपि च यस्यैवायं भगवाननङ्गः स्वयं सजन्नुपनेष्यते स एव ते पतिः ।

**लम्बस्तनी**—( ख ) वत्से ! भोदु एदं, पिॅच्छ भयवदो पहावं ।

---

( क ) अथ किम् ? ।

( ख ) वत्से ! भवत्वेतत्, पश्य भगवतः प्रभावम् ।

१ ख–' पेच्छ ' इति पाठः ।

सिद्धाधिनाथः—( कामामितापमभिनीय )

अस्यां मृगीदृशि दृशोरमृतच्छटायां
　देवः स्मरोऽपि नियतं विततामिलाषः ।
एतत्समागममहोत्सवबद्धतृष्ण-
　माहन्ति मामपरथा कथमेष बाणैः ? ॥ १२ ॥

( पुनरात्रेयीं प्रति )

नतशतमखकामिनीप्रसून-
　च्युतमकरन्दकरम्बितांह्रिपद्माम् ।
द्रुहिणहरिहरोपजल्प्यनाम्नः
　प्रणम मृगाक्षि ! मनोभवस्य मूर्तिम् ॥ १३ ॥

आत्रेयी—( उत्थाय प्रणम्य च सविनयं ) ( क ) भयवं कुसुमबाण ! पसिअ उवणेहि पिअं जणं । अहं ते पुरिसेण बलिं करिस्सं ।

( नेपथ्ये )

भद्रे ! स्वयं सन्निहिते भर्तरि किं भर्तारमर्थयसे ? ।

आत्रेयी—( ख ) कथमेस सयं भयवं पंचबाणो जंपेदि ? । ( पुनर्विलोक्य ) कथं सयं सयंवरमालं सिद्धणाहस्स कंठे निक्खिवेदि ? ।

---

( क ) भगवन् कुसुमबाण ! प्रसद्योपनय प्रियं जनम् । अहं ते पुरुषेण बलिं करिष्ये ।

( ख ) कथमेष स्वयं भगवान् पञ्चबाणः जल्पति? । कथं स्वयं स्वयंवरमाला सिद्धनाथस्य कण्ठे निक्षिपति ? ।

( सर्वे सविस्मयमवलोकयन्ति । )

**सिद्धाधिनाथः**—( सविस्मयमात्मगतं ) कथमिदं तदेव त्रिलोकीकामिनीजनमनःक्षोभैकहेतुर्ग्रैवेयकमुपनीतं भगवता पञ्चबाणेन ? । (पुनरपवार्य) लम्बस्तनि ! किमिदं ?, कैतवमपि सत्यतामगात् ।

**लम्बस्तनी**—( क ) अहं पि विम्हिदा चिट्ठामि ।

**आत्रेयी**—( सात्त्विकभावानभिनीय सरभसं ) ( ख ) एसो सो च्चेअ मे पई । ( पुनः सरभसं ) अज्जउत्त ! चिरा दिट्ठो सि ।

**लम्बस्तनी**—( ग ) वत्से ! निरूविदो तए भयवदो पहावो ?, ता इयाणिं उववसिय देहि पुरिसोवहारं ।

**सिद्धाधिनाथः**—( दक्षिणाक्षिस्फुरणमभिनीय सरभसं ) भगवन् कुसुमचाप !

अमन्दं स्पन्दमानस्य दक्षिणस्यास्य चक्षुषः ।
फलं प्रयच्छ सम्पर्कं तेन जीवितदायिना ॥ १४ ॥

( नेपथ्ये ) ।

एष प्रत्यासन्नः ।

---

( क ) अहमपि विस्मिता तिष्ठामि ।

( ख ) एष स एव मे पतिः । आर्यपुत्र ! चिराद् दृष्टोऽसि ।

( ग ) वत्से ! निरूपितस्त्वया भगवतः प्रभावः ?, तदिदानीमुपप्रसद्य देहि पुरुषोपहारम् ।

सिद्धाधिनाथः—किं जीवितदायिनः संपर्कः प्रत्यासन्नः ?।

(नेपथ्ये)

एष प्रत्यासन्नः कालो निशीथस्य। तदारभ्यतां बलिकर्म !

(ततः प्रविशति यावकरसोपलिप्तसर्वाङ्गः करवीरदामालङ्कृतकण्ठपीठो निवसितकुसुम्भवसनः पुरुषः ।)

सिद्धाधिनाथः—(अपवार्य) लम्बस्तनि ! तथा त्वयाऽप्ययमुपलिप्तो यथा सर्वथा नोपलक्ष्यते । क्रूरकर्मणि पटीयसी खल्वसि ।

(पुरुषः पञ्चबाणं प्रणम्य प्रदक्षिणीकृत्य च होमकुण्डसविधमुपविशति ।)

लम्बस्तनी—(क) वत्से ! करेहि भयवदो कुंडाणलस्स उवहारपुरिसस्स य पूयं ।

(आत्रेयी तथाकरोति ।)

सिद्धाधिनाथः—महापुरुष ! सार्वकामिकमिदं शाश्वतिकमग्निकुण्डम् । भगवतः पञ्चबाणस्य पुरतो वनितया स्वयमस्मिन्नाहुतीकृतः स्वर्गसुन्दरीणां पतिर्भविष्यसि । तदिदानीं क्लेशसहस्रपिच्छिलं पितृमातृपुत्रकलत्रस्वापतेयप्रेमाणमपहाय परलोकमधितिष्ठासुः प्रशान्तेन चेतसा स्मर किमपि दैवतमिष्टम् ।

---

(क) वत्से ! कुरु भगवतः कुण्डानलस्योपहारपुरुषस्य च पूजाम् ।

पुरुषः—( सविनयमञ्जलिं बद्ध्वा )

शीर्णनिःशेषसंसारव्यापारावेशवैशसम् ।
स्मरामि निष्ठितक्लेशं देवं नाभिसमुद्भवम् ॥ १५ ॥

सिद्धाधिनाथः—ऐहिकमपि किमपि शरणं प्रतिपद्यस्व ।

पुरुषः—ऐहिकः पुनरनङ्गदासो योनिसिद्धः शरणम् । यो मया वरुणद्वीपे स्वयमुपकृतः ।

सिद्धाधिनाथः—कथं भवान् मित्राणन्दः ? ।

पुरुषः—मित्राणन्दोऽस्मि ।

सिद्धाधिनाथः—( प्रणम्य ) परमेश्वर ! प्रसीद प्रसीद । क्षमस्व कृतघ्नस्य क्रूरचेतसोऽनङ्गदासस्य तमेकमपराधम् । ( पञ्चभैरवं प्रति ) स एष मे जीवितस्य स्वामी मित्राणन्दो यद्वेपणाय यूयमभ्यर्थिताः ।

( पञ्चभैरवः यावकोपलेपमपनीय मित्राणन्दं सिंहासने समुपवेशयति । )

( आत्रेयी प्रत्यभिज्ञाय परिरभ्य च तारस्वरं प्रलपति ।)

पुरुषः—( सबाष्पं ) प्रिये ! कामिमां दुःस्थामवस्थामधिगतवत्यसि ? ।

सिद्धाधिनाथः—अपरमपि बहु कर्तव्यमस्ति । परमिदानीं गृहाण स्त्रीरत्नमेकम् । अमुमेव कुण्डाग्निं प्रदक्षिणीकृत्य

परिणय भगवतः पञ्चवाणस्य पुरतः। ( लम्बस्तनीं प्र्ति ) उपनय द्वितीयां तां तापसीम्।

( प्रविश्य तापसी प्रणमति। )

आत्रेयी—( निभृतं विलोक्य ) ( क ) कथमेसा सुमित्ता ?।

पुरुषः—कथमेषा सुमित्रा मकरन्दपत्नी ?। ( पुनः सिद्धं प्रति ) इयं मे मित्रस्य पत्नी सुमित्रा।

सिद्धाधिनाथः—( सलज्जं ) केयमपराधपरम्परा ?। ( पुनः पुरुषं प्रति ) एते द्वे अपि मयैवापहृत्य विहितरूपान्तरे लम्बस्तनीवेश्मनि परस्परवार्तानभिज्ञे विहितनामान्तरे कालमियन्तं विधृते। ( पुनर्विमृश्य ) पतिरस्याः क्व वर्त्तते ?।

पुरुषः—यदाहं वेलन्धरनगरात्स्वनगरं प्रति प्रतिष्ठमानो युष्मद्विधाधरैरपहृतस्तदा पतिरस्याः क्वचिदपि पलाय्य गतवान्।

( प्रविश्य )

प्रतीहारः—एकः पथिको देवपादान् द्रष्टुमभिलषति।

[ सिद्धाधिनाथः—शीघ्रं प्रवेशय।

( प्रतीहारो निष्क्रान्तः ) ]

( प्रविश्य पथिकः प्रणमति। )

---

( क ) कथमेषा सुमित्रा ?।

पुरुषः—कथमेष मकरन्दः ? । (इति सरभसमुत्थाय परिरभते।)

सिद्धाधिनाथः—( पुरुषं प्रति ) कोऽयं पथिकः ? ।

पुरुषः—अस्मन्मित्रं सुमित्रायाः पतिरयम् ।

( तापसी विलोक्य सरोमाञ्चमधोमुखीभवति । )

सिद्धाधिनाथः—( पथिकं प्रति ) किमर्थमत्रागमनं भवतः ? ।

पथिकः—विज्ञातवरुणद्वीपवृत्तान्तोऽहं मित्राणन्दव्यसनं विज्ञपयितुं युष्माकमुपस्थितोऽस्मि ।

सिद्धाधिनाथः—( सपश्चात्तापं पुरुषं प्रति ) युष्माभिरेवाहमुपकृत्य स्वयमात्मा व्यसने पातितः ।

क्रूरः कृतोपकारः प्रत्यपकाराय कल्पते भूयः ।
विरचितपाशविनाशः प्रणिहन्ति विपाशकं सिंहः ॥१६॥

पुरुषः—सिद्धाधिनाथ ! मास्म विषीदः । यदि व्यसनमिदं न भवेत्तदानीं कथमहं सन्निहितमित्रकलत्रः स्याम् ।

अपकारं कुर्वाणैरुपकारः कोऽपि शक्यते कर्तुम् ? ।
सन्ताप्य फलसमृद्धाः करोति धान्यौषधीस्तपनः ॥१७॥

( सिद्धाधिनाथः सलज्जमधोमुखो भवति । ) ।

पुरुषः—सिद्धनाथ ! प्रियसम्पर्को वृथा मे मैत्रेयं विना।

सिद्धाधिनाथः—( पद्मवैरवं प्रति ) ब्रूहि माणिक्यम् । यथा प्रियः सर्वोऽपि सङ्घटितः परमेकोऽत्रापिष्यते तदर्थं प्रयतस्व

( नेपथ्ये )

प्रभातप्राया रजनिः । इदानीमनवसरो मन्त्रस्य ।

सिद्धाधिनाथः—( आकर्ण्य ) पञ्चभैरव ! तर्हि ब्रूहि कुन्दलतां यथा मान्त्रिकमस्माकं दर्शय ।

( पञ्चभैरवो निष्क्रान्तः । )

( ततः प्रविशति कुन्दलता मान्त्रिकश्च । )

सर्वे—( विलोक्य ) कथमयं मैत्रेयः ? । मोदामहे मनोरथानामप्यगम्येन प्रियजनसङ्घटनेन ।

पुरुषः—मैत्रेय ! कथमत्र संप्राप्तोऽसि ? ।

मान्त्रिकः—रत्नाकरात्त्वया सह वियोजितो भ्राम्यन् कुन्दलतामनुसृतवान् ।

सिद्धाधिनाथः—किं ते कुन्दलता दृष्टचरी ? ।

मान्त्रिकः—वरुणद्वीपे दृष्टचरी । ( पुनरौषधिवलयं सिद्धनाथस्योपनीय ) स्वेनैवौषधिद्रवेण यूयमुपशान्तप्रहारवेदनाः संजाताः ।

सिद्धाधिनाथः—( पुरुषं प्रति ) कुतस्ते कण्ठिकाया लाभः ? ।

पुरुषः—पाशपाणिनेयं मह्यमुपनीता । मया च जातमरणनिश्चयेन स्मरप्रतिमापृष्ठस्थितेन युष्मत्कण्ठे विनिवेशिता ।

सिद्धाधिनाथः—कौमुदीमुपहर्तुं भ्राम्यन्नहं तदानीं पाशपाणिना विडम्बितः । भवान् घातहेतुश्चायं मकरन्दः कौमुदीसुमित्रानुरागिणा मयास्मिन्नग्निकुण्डे कामदेवपुरतो व्यापाद-

यितुं गवेषितः । इयं च स्वयं त्वया पुरः कौमुदी समासादिता । इदानीं पुनर्मयोपनीता ।

पुरुषः—यो मया प्रवहणभङ्गादारभ्य क्लेशोऽनुभूतस्तस्य सर्वस्य युष्मत्प्रसादेन पर्यन्तः समजनि । तदिदानीं समित्रकलत्रस्वापतेयं मामुपनय कौतुकमङ्गलनगरम् ।

सिद्धाधिनाथः—इयतोऽप्यर्थस्य का नाम प्रार्थना ? । समादिश किमपरं ते प्रियमादधामि ? ।

पुरुषः—अतः परमपि किमपि प्रियमस्ति ? ।

सिद्धाधिनाथः—तथापीदमस्तु—

उपनतमित्रकलत्रः संतप्तारामचन्द्रकरविशदाम् ।
आसाद्य यशोलक्ष्मीं परां स्वतन्त्रश्चिरं भूयाः ॥ १८ ॥

॥ इति दशमोऽङ्कः ॥


॥ कृतिरियं प्रबन्धशतकर्तुर्महाकवेः श्रीरामचन्द्रस्य ॥

